# वासुदेवविजयम् ।



श्रीरामनाथतर्करत्नप्रणीतम् ।

श्रीयुक्त बाबु द्वारकानाथभञ्ज महानुभवस्य

साहाय्येन

वाल्मीकियन्त्रे मुद्रितम् ।






कलिकाताराजधान्यां

श्रीयुक्त देवेन्द्रनाथभञ्जेन प्रकाशितम् ।

शकाब्दा १८०९ ।



पूर्णचंद्र॥

# वासुदेवविजयम्।

---

## प्रथमः सर्गः।

---

पवित्रचारित्रतया जगत्त्रयं
पवित्रयन् निर्मलकीर्त्तिमौक्तिकैः
विभूषयामास कुलं कलानिधे-
रुदारशौर्य्यैकरसो रमापतिः ॥ १ ॥

क्वचिन्न दुर्भिक्षमलक्ष्यत क्षितौ
पयांसि काले मुमुचुः पयोमुचः।
न भानुरत्यर्थमतापयज्जग-
ज्जगन्निवासे वसति क्षमातले ॥ २ ॥

विधाय भूमेस्तलमस्तकण्टकं
स वीरलक्ष्म्या विदधेऽभिषेचनम्।
विपक्षकान्ताकुचकुम्भसम्भृतैः
समुच्छलन्मौक्तिककान्तिवारिभिः ॥ ३ ॥

ज्वलत्प्रतापानलतापितारिणा
रणाजिरे कार्म्मुकबाणधारिणा ।
विधाय विध्वंसमशेषविद्विषां
लघूकृता तेन मही महीयसी ॥ ४ ॥

विशीर्णसौधत्रुटदृट्टगोपुरैः
पुरैः परीता द्विषतामनेकशः ।
गुणानुरागादिव सागराम्बरा
जगज्जयं तस्य शशंस सर्वतः ॥ ५ ॥

हरेरुरःपीठमिवाब्धिनन्दिनी
तुषारधामानमिवामला द्युतिः ।
महेशदेहार्द्धमिवाम्बिकानिशं
तमंविदच्चैः सकला समन्वगात् ॥ ६ ॥

उदग्रबाणव्रजदीर्णविद्विषत्-
करीन्द्रकुम्भच्युतचारुमौक्तिकैः ।
स्वकीर्त्तिवल्लीस्फुटबीजसन्निभै-
रवाकिरत् सङ्गरभूमिमच्युतः ॥ ७ ॥

विलोचनान्तःस्रवदस्रबिन्दुभि-
र्विशालमुक्ताफलसन्निभैः सदा ।
निवेशितास्तेन रणे जितारिणा
विपक्षनारीगणवक्षसि स्रजः ॥ ८ ॥

अशेषदृष्टोक्तिविशेषकोविदै-
रलक्ष्यवेषैः परितः प्रसारिभिः ।
विवेद विद्वान् स हि नीतिसञ्चये
चरैरुदारैश्चरितानि विद्विषाम् ॥ ९ ॥

नयेन लोकान् विनयेन बान्धवान्
परान् प्रतापेन धनेन याचकान् ।
गुरून् प्रणत्या महसा जगत्त्रयीं
वशीचकाराशु स शीलवान् हरिः ॥ १० ॥

न दूषणं भूषणतामुपागतं
न भूषणं दूषणबुद्धिमादधे ।
सुते रिपौ वापि विचारचातुरी-
धुरीणचित्तस्य च तस्य कर्हिचित् ॥ ११ ॥

कुमुद्वतीशेन निशेव शारदी
सुरद्रुमेणेन्द्रपुरीव निर्मला ।
हरीव पार्थेन्द्रवरेण निर्भरं
विभूषिता तेन बभूव मेदिनी ॥ १२ ॥

तमालनीलद्युतिरम्बुजेक्षणो
मनोविनोदं जनयंश्च पश्यताम् ।
अमन्दमानन्द इवैष मूर्त्तिमा-
नमानि दृग्वर्त्मगतो हिताहितैः ॥ १३ ॥

सुधेव दुग्धा हिमधामबिम्बतो
नदीव पुण्या गिरिराजकन्दरात् ।
तदाननान्निर्गलिता सरस्वती
विनोदयामास न कस्य मानसम् ॥ १४ ॥

उरःकवाटं किल कैटभद्विषो
रमावलम्बे चपलापि निश्चला ।
चिरं सरस्वत्यपि तज्जिगीषया
बभूव तत्कण्ठतटीकृतास्पदा ॥ १५ ।

विलोक्य तद्बाहुयुगं विलज्जितो
भुजङ्गराजः प्रययौ रसातलम् ।
ततः कदाप्येष न सन्निवर्त्तते
चिरानुबन्धा हि महात्मनां ह्रियः ॥ १६ ॥

अशेषसौन्दर्य्यविशेषशोभिनो
जितस्तदूरुद्वितयस्य कान्तिभिः ।
गजाधिराजः सुचिरं विनिःश्वसन्
बिभर्त्ति सङ्कोचकदर्थितं करम् ॥ १७

समुच्चदुद्दामरुचो दिवानिशं
तदङ्घ्रियुग्मस्य नखेन्दुमालिनः ।
हिमाभिभाव्येन दिवाविकासिना
सरोरुहेणोपमितिर्विडम्बनम् ॥ १८ ॥

## प्रथमः सर्गः ।

अनन्तसामन्तशिरोमणिस्फुरत्-
प्रभाभरोद्भासि पदद्वयं हरेः ।
सरोजिनीनायकरोचिरुज्ज्वलं
विलज्जयामास विनिद्रमम्बुजम् ॥ १९ ॥

बभूव तस्यातिमनोविनोदिनी
नदीप्रियाङ्के नगरी गरीयसी ।
अशेषभूमण्डलमौलिमण्डनं
धरस्थितिर्द्वारवतीति विश्रुता ॥ २० ॥

सदाशिवावस्थितिसौख्यशालिनी
कुमारसञ्चारविराजितद्युतिः ।
मुदा सदानन्दिगणैर्विभूषिता
पुरी पुरारेरिव या बभौ भुवि ॥ २१ ॥

शिरःस्फुरत्काञ्चनसिंहतोरणा
नियन्त्रिता तीक्ष्णकृपाणपाणिभिः ।
कनत्स्वनोत्तुङ्गसमुद्रमेखला
श्रिया हसन्तीव पुरं सुरेशितुः ॥ २२ ॥

विचित्रचामीकरदण्डकल्पितै-
र्ज्वलत्प्रतापैरिव शार्ङ्गधन्वनः ।
विराजमानैर्वरणैः समाहता
चिरादृशीया किल या सुरैरपि ॥ २३ ॥

अगस्त्यवीभूषणतामुपागतां
विधातुमुत्को भुवि यां सरोजभूः।
चकार पूर्वं निजशिल्पकल्पना-
विलोकनायैव महेन्द्रपत्तनम् ॥ २४ ॥

क्षितेर्विभूषा भुवनस्य सम्पदां
निधानमुद्दामनिकेतनं श्रियः।
यशो नवं शिल्पकलासु वेधसो
विलोक्य यामित्यममानि मानवैः ॥ २५ ॥

पुरा मुरारेहिव सर्ववरोऽम्बुधि-
विभाव्य रत्नाकरतामिवात्मनः।
प्रवालमुक्ताफलरत्नराशिभिः
प्रसाधयामास च यां प्रयत्नतः ॥ २६ ॥

नवाम्बुदश्यामतनुं मनोहरं
हरिं सुहृद्द्रष्टुमनोभिरादरात्।
यदङ्गनाध्याजमुपेत्य सम्पदा-
दचञ्चलत्वञ्चपलाभिरर्चितम् ॥ २७ ॥

समुल्लसल्लोचनचारुषट्पदाः
पदारविन्दाश्रितचित्रहंसकाः।
श्रियं दधुः केशकलापशैवलाः
सरोजिनीनामपि यन्मृगीदृशः ॥ २८ ॥

कुतूहलं तत्र बभूव कुत्रचिद्
यदाविरासीन्नहि यत्र नित्यशः ।
न सन्ददृशुस्ता जगतीतलेऽभवन्
विलोकिताश्चैव न या गृहे गृहे ॥ २८ ॥

यदन्तरुद्भासितसौधमण्डली-
विलोकनान्मुग्धमना मुहुर्मुहुः ।
वसन्नपि श्रीमति चन्द्रमण्डले
कलङ्करङ्कुर्न दधौ स्थिरां धियम् ॥ ३० ॥

समुल्लसत्फेनसमानकान्तिभि-
स्तरङ्गितैर्धीरसमीरसङ्गमात् ।
प्रवापि यत्रोपरिविभ्रमकेतनैः
सुरापगातुङ्गतरङ्गभङ्गिमा ॥ ३१ ॥

रराज यस्यां कलधौतमञ्जरी-
परिष्कृताट्टालकराजिरुज्ज्वला ।
परिस्फुरत्काञ्चनवल्लिमेखला
धराधरेन्द्रस्य प्रियोस्तनूरिव ॥ ३२ ॥

हरिन्मणिस्तम्भसहस्रकैतवात्
फणाभिरुच्चैः कलितेन पन्नगैः ।
सरोजरागोज्ज्वलशिल्पशालिना
ललास नासापटलेन या मुहुः ॥ ३३ ॥

समन्ततो हारशिरोविलम्बिता-
द्विधाकृताः शुभ्रदुकूलकल्पिताः ।
समुद्वहन्ती जवनीः स्फटोपमाः
भुजङ्गराजाङ्गविमुक्तकञ्चुकैः ॥ २४ ॥

यदुल्लसद्यन्मणिमूर्त्तिसंहतिः
करस्फुरद्रत्नमहस्प्रदीपिका ।
तिरस्कृतार्कांशुचया चयैस्त्विषां
तडित्ततिर्मूर्त्तिमतीव निर्ल्लिये ॥ २५ ॥

हरिन्मणिश्यामलमन्दिरोदरे
मृदङ्गघोरध्वनिभिर्विबोधितैः ।
सदैव यत्राविरकारि कौतुका-
च्छिखण्डिभिस्ताण्डवडम्बरोत्सवः ॥ २६ ॥

मनोज्ञमाणिक्यकटम्बकल्पिता-
ननल्पशिल्पान् निलयाननेकशः ।
विलोकयन्तोऽधिविभातमुद्भृतं
निनिन्दुरिन्दीवरबान्धवं न के ॥ २७ ॥

समन्ततः स्फाटिकहर्म्यभित्तिषु
प्रतीयमानप्रतिबिम्बसम्पदम् ।
नितम्बिनीं स्वामपि केलिकौतुकी
विवेद विद्वानपि यत्र न प्रियः ॥ २८ ॥

यदिन्द्रनीलामलमन्दिराजिरे
विराजमाना वरकाञ्चनत्विषः।
विडम्बयामासुरजस्रमङ्गना
घनाघनासक्ततडिल्लतागतम् ॥ ३९ ॥

समुल्लसत्काञ्चनदीपधेरधः
परिस्फुरद्विद्रुमभित्तिमाश्रिता।
अशोभतालेख्यकलापकैतवात्
किरीटिनी वारुणलोकसन्ततिः ॥ ४० ॥

सुखोषिताः काञ्चनपिञ्जरे शुका
मुदा जगुर्यत्र हरेर्यशःस्तुतीः।
गृहीतवर्णस्वरभेदकौशलाः
सरस्वतीसद्मनि सामगा इव ॥ ४१ ॥

सुरम्यसोपानपरम्परापुरः
प्रशस्तशोणायनमध्यमास्थिता।
सदा शतघ्नी मनुजाननूमुह-
न्महासुखीव स्थिरशोणपूरगा ॥ ४२ ॥

सुवर्णजस्तम्भनिषण्णविग्रह-
स्फुरन्मुखोत्थं चलयन्त्वमञ्चितम्।
प्रपश्यतां यत्र सुचारुकारवा-
दजीजनज्जीवनमानवभ्रमम् ॥ ४३ ॥

समन्ततो लोहितकान्तिवीथिका
क्वचिद् दृषन्निर्मितमुग्धनायिका ।
इतस्ततः कृत्रिमकुञ्जवेदिका
पुरः पुरोऽराजत पुष्पवाटिका ॥ ४४

सिताश्मसोपानशतेन सङ्गतै-
र्विराजितैः सारसहंसकूजनैः ।
सरोरुहोल्लासितचारुवारिभिः
सरोवरैर्भूरितरैर्विभूषिता ॥ ४५ ॥

अतिस्फुटस्फाटिककुट्टिमोपरि
प्रकामविन्यस्तसमस्तवस्तुभिः ।
यदापणैश्चेतसि मौक्तिकार्थिना-
मकारि काचैरपि मौक्तिकभ्रमः ॥ ४६ ॥

वणिग्वधूनां मधुराधरस्फुर-
न्मनोरमान्तःस्मितभाषितादिषु ।
नितान्तमुत्कण्ठितचित्तवृत्तयोऽ-
विदुर्जना यत्र न कालमात्मनः ॥ ४७ ॥

महामहार्घानभिरूपरूपकान्
मणीनमेकान् विनिधाय संस्थितान् ।
विलोकयन्तो वणिजो यदापणे
जनाः भनाधीशनरपोऽप्यभूद्दिरे ॥ ४८ ॥

जनैरवज्ञातकवाटमुद्रणै-
र्निशामुखे यत्र सुखादसुप्यत ।
गवाक्षमार्गैर्व्यविशत् क्षपापतेः
करः शनैश्छिद्रपथैर्न तस्करः ॥ ४९ ॥

सुधोपमप्राज्यनवाज्यसौरभै-
र्घृतद्रवं यद्दनघोषणैरपि ।
सुधाभृतामध्वनिरुद्धचेतसां
यया च विश्वासितमाप मानसम् ॥ ५० ॥

वसन् स तस्यां पुरि पार्वतीपति-
प्रभः प्रभावातिशयैर्महायशाः ।
निहत्य दैत्यान् लघयन् धराभरा-
नकल्पयद्देवकुलं निराकुलम् ॥ ५१ ॥

प्रसह्य भूपालगणान् रणाङ्गने
विजित्य दैत्यानिव विष्टरश्रवाः ।
अवाप पूर्णेन्दुमुखीं प्रियामसौ
विदर्भजामम्बुधिनन्दिनीमिव ॥ ५२ ॥

श्रियेव विष्णुः शिवयेव शङ्करः
पतिः पुलोमात्मजयेव नाकिनाम् ।
समं तया केलिकलासु कौतुकी
मनोऽनुकूलानि सुखानि सोऽन्वभूत् ॥ ५३ ॥

मनस्विनीमम्बुजमञ्जुलोचनां
शरत्सुधादीधितिसोदराननाम् ।
सुखेन सत्राजितराजनन्दिनी-
मथोपयेमे जगतामधीश्वरः ॥ ५४ ॥

परस्परालोकनकेलिकौतुके
निमिषलेशोऽभ्युदियाय यस्तयोः ।
अनल्पकल्पायितत्न्त्वणस्तदा
ततोऽपि ताभ्यां विरहोऽन्वभूयत ॥ ५५ ॥

अथारविन्दाक्षमुखेन्दुमौचितं
समुत्सुकान्तःकरणेन निर्भरम् ।
चकोरवत् सञ्चरता मरुत्पथे
सुरर्षिणा प्रापि पुरी सुरद्विषः ॥ ५६ ॥

प्रदीप्तचामीकरचारुदीप्तिभि-
र्जटाकलापैः सुतरां समुज्ज्वलः ।
समुच्छलद्भिः परितः शिखाशतैः
शुभः शिखावानिव शान्तदर्शनः ॥ ५७ ॥

उदारमूर्त्तिर्विशदावलोकनैः
प्रमोदमालोकयतां प्रचारयन् ।
रराज राजीवविशाललोचनो
महानसौ धर्म्म इवात्तविग्रहः ॥ ५८ ॥

अरोचताच्छस्फटिकाक्षमालिका
तदा मदत्याः श्रवणावलम्बिनी ।
विशुद्धशब्दप्रमुखस्वरात्मक-
श्रुतेस्ततिर्मूर्तिमतीव श्रद्धया ॥ ५९ ॥

स्फुरज्जटाजूटतटीषु सितद्युति-
र्लवेषु शीर्षं शनकैर्विधूनयन् ।
हिमस्थलीसंभूतविधूतवह्निना
दधार साम्यं शिरसा गिरीशितुः ॥ ६० ॥

अमुं समाकर्ण्य निकेतमागतं
सुतं विधेः सत्वरमुत्कमानसः ।
तदोदतिष्ठद्वरकाञ्चनासनान्-
मुदा मुकुन्दो विनयान् सतार्थयन् ॥ ६१ ॥

ससम्भ्रमं भूरितराणि भक्तितः
पदानि गत्वातिजवेन यादवः ।
स दण्डवत् तस्य पपात पादयो-
र्गुरौ प्रणामो हि शिवाय कल्पते ॥ ६२ ॥

सुरारिमुत्थाप्य करेण सादरं
विधाय वेदोदितमङ्गलाशिषः ।
निमज्जयन् मोदमहोदधौ वपु-
र्भुजोपपीडं परिषस्वजे मुनिः ॥ ६३ ॥

प्रमोदवाष्पप्रतिरुद्धभाषितो
दरस्मितोद्धासिमुखेन्दुरध्वनः ।
स तं प्रतीहार इव स्वयं दिशन्
प्रवेशयामास निवेशमात्मनः ॥ ६४ ॥

अनन्तसन्तापनिवृत्तिकारकं
सुमङ्गलानामिव केलिमन्दिरम् ।
फणीव निर्मुक्तजराघकञ्चुको
मुनिर्मुदागादधिमध्यमण्डपम् ॥ ६५ ॥

समं महिष्या तरसाथ शौरिणा
स्वयं समानीय तदा निवेदिते ।
सुखोपविष्टो वरकाञ्चनासने
रराज पूषेव स मेरुमूर्द्धनि ॥ ६६ ॥

सुधांशुकान्तप्रतिमैरभीषुभिः
शमैश्च नीलाम्बुजगर्भसन्निभैः ।
तयोर्मिथः सम्बलितं सदस्तलं
सितासितद्योतमदः समासदत् ॥ ६७ ॥

पुरः स्थितोऽस्याजिनिनः सितद्युतेः
स पीतवासा दलिताञ्जनच्छविः ।
नवोदितैणाङ्कसुमेरुशीर्षका-
दधस्तडिद्वानिव तिलिपे तदा ॥ ६८ ॥

प्रणुद्य पाद्यादिभिरध्वनः श्रमा-
नेनामयं पुण्यमथानुयुज्य च ।
वरातिथेयो मधुपर्कपूर्वकं
महर्षये गामपि स न्यवेदयत् ॥ ६९ ॥

सुधाभिरामस्मितभासितानन:
समुल्लसद्दास्यकलाविलेक्षणः ।
प्रमोदयन् मानसमञ्जसा मुने-
र्मुदा तदानीमिदमाह माधवः ॥ ७० ॥

भवाम्बुधौ घोरतरे निमज्जता-
मिदं जगत्यामवलम्बनं महत् ।
महामुने ! यद्भवनेषु मज्जति
भवत्पदाम्भोजरजोऽपि किंचन ॥ ७१ ॥

अहन्तु सर्वार्थकृतार्थताश्रयो:
कृतस्त्वयोदारदयानिधे । चिरात् ।
सुरेन्द्रवन्द्याङ्घ्रिसरोरुहो भवान्
यदागतो ब्रह्मरतोऽपि मद्गृहान् ॥ ७२

समुज्झितोल्लिङ्गसमस्तसम्पदा-
मुदात्तयोगोदयदत्तचेतसाम् ।
भवादृशां दर्शनमेव दुर्लभं
समागमे नाथ ! मनोरथः कुतः ॥ ७३ ॥

ममार्ज्जितायाः किल कोटिजन्मभि-
श्चिरादसाधारणपुण्यसम्पदः।
असौ भवद्दर्शनसिद्धिसाधकः
परः परीपाकविधिर्विजृम्भते ॥ ७४ ॥

भवादृशां ब्रह्मनिमग्नचेतसा-
मसारवज्जाति जगत्त्रयी सदा।
तथापि चापल्यवशात् त्वदागम-
प्रयोजनापेक्षि मदीयमानसम् ॥ ७५ ॥

श्रीवासुदेवविलसद्वदनारविन्द-
सानन्दभाषितसुधारसधोरणीषु।
निःसन्दतामुपगतेन हृदा तदानीं
लेभे मधुव्रततुला द्रुहिणात्मजेन ॥ ७६ ॥

वदति विनयपूर्वं केशवे भक्तियोगाद्
यदभवदतिमुग्धो नारदो नात्र चित्रम्।
द्रवदमृतमुदारं सादरं वर्षतीन्दौ
भजति किमु कदाचित् कामचारं चकोरः ॥ ७७ ॥

इति वासुदेवविजये महाकाव्ये नारदागमनो
नाम प्रथमः सर्गः।

---

## द्वितीयः सर्गः ।



कथावसाने विलोकितेन
स्मितेन पीयूषसहोदरेण ।
प्रकाशयन् शान्तिमिवाम्बरस्थै-
र्गिरं गभीरामवदन्महर्षिः ॥ १ ॥

तदोपमन्या शरदन्तकान्त्या
विराजमानं वदनं महर्षेः ।
जहार शीतांशुनवांशुजालै-
रस्फुरत्तारसरोजलक्ष्मीम् ॥ २ ॥

विधिप्रधानैरपि नाकनाथै-
र्निषेव्यते यच्चरणारविन्दम् ।
सोऽपि त्वमस्मासु तनोषि भक्तिं
न वेद वेदोऽपि तवेश ! भावम् ॥ ३ ॥

भवत्पदाम्भोरुहवीक्षणाय
सदा मनो यन्मम जातमुत्कम् ।
सुखेन तेनैव मुकुन्द ! मन्ये
धन्यं त्वदालोकनमुक्तिहीति ॥ ४ ॥

न ते जगन्मङ्गलमङ्गलस्य
कृत्यं लघीयोऽपि समागमे मे ।
मया तु युष्मच्चरणारविन्द-
विलोकमात्रव्यमवापि भव्यम् ॥ ५ ॥

पुरः सुरेशस्य वराप्सरोभि-
र्गीते भवत्कीर्त्तितुषाररश्मौ ।
चिरं चकोरायितचित्तहंसे-
र्ममाभवद् भूरितरः प्रमोदः ॥ ६ ॥

लोकेश ! लोकेषु शिवादिकाना-
माकर्णते तावककीर्त्तिरेव ।
इयन्तु धन्या धरणी यदेना-
मलङ्करोषि स्वपदार्पणेन ॥ ७ ॥

वर्षत्युपेन्द्र ! त्वयि दानधाराः
संश्रेरते के न सुरद्रुमत्वम् ।
छायार्थमेव त्रिदशाङ्गनाभि-
रुपास्यते केलिकुतूहलैः सः ॥ ८ ॥

निःशेषिताशेषसुरारिवर्गं
सगर्वगीर्वाणगणैरुदयम् ।
विदूरिताधर्ममुदीर्णधर्मं
जगत् त्वयाकारि सता कृतार्थम् ॥ ९

मध्येसभं सादरमप्सरोभिः
स्फीतेषु गीतेषु भवद्यशःसु ।
अवाप यं श्यामलिमानमिन्दुः
स एव जातो विमलः कलङ्कः ॥ १० ॥

धृतायुधः स्यन्दनमिन्दुशोभं
यदा समारोहसि दर्पतोऽपि ।
तदैव वृन्दारकवृन्दवालाः
सृजन्ति कल्पद्रुमपुष्पमालाः ॥ ११ ॥

चिराय रिक्तेऽपि पुरे रिपूणां
तवौषधीभिर्ज्वलिताभिरुच्चैः ।
सभागृहा दीप्तवदप्रदीपाः
पुरेव राजन्ति निशासु नित्यम् ॥ १२ ॥

दयानतात्यानपि दुष्टवित्तान्
निहत्य दैत्यान् स्वभुजप्रतापैः ।
सुरश्रियं गोपमिवाम्बुमग्नां
भवान् सदा न व्ययमुज्जहार ॥ १३ ॥

मुहुर्मुहुर्दैत्यचमूसमूहै-
र्वन्दीकृतानां सुरसुन्दरीणाम् ।
विमोचनस्य पणभङ्गराया
भुवौ विलासस्य हेतुरासीत् ॥ १४ ॥

परोपकारैकपरायणेन
नारायणेनाखिललोकधात्रा ।
मग्नो विपद्वारिनिधावगाधे
त्वयोद्धृतः सखे ! कदा न जिष्णुः ॥ १५ ॥

जगज्जगन्नाथ ! समस्तमेव
करारविन्दे बदरायितं ते ।
तथापि यत् पृच्छसि मामुदन्तं
हेतोरतो मोहमयं वदामि ॥ १६ ॥

प्रयुज्य योगानपि जातु योगी
निरीक्षते यन्न जनुःसहस्रैः ।
तद्द्रक्ष्यते ते चरणारविन्द-
मितः परं किं किल भाग्यमास्ते ॥ १७ ॥

अथापरं किञ्चन कौतुकाय
निवेदयाम्यद्य यदेव दृष्टम् ।
कथावतारेषु पुरः प्रभूणां
जल्पो न कल्पेत हि दूषणाय ॥ १८ ॥

पुरानुरागेण भवान् सुराणां
हिंसारसेनापि दितेः सुतानाम् ।
ममन्थ मन्थाचलदण्डधारी
सर्व्वोपकारी किल दुग्धसिन्धुम् ॥ १९ ॥

तदाविरासन् मथितात् पयोधेः
सुधासुधादीधितिकौस्तुभाद्याः ॥
तयोद्गतः कश्चन तद्वराजः
कुत्रापि नास्ते खलु यत्सदृक्षः ॥ २० ॥

पुरः स्थिते त्वय्यपि विश्वपूज्ये
तं देवराजस्तरसा निनाय ।
समीहितावाप्तिषु लोभभाजा-
मालम्बते जातु न हृद् विचारम् ॥ २१ ॥

अशेषशाखोन्नतपल्लवश्रीः
सदा समुल्लासिघनप्रसूनः ।
स एक एव द्युसदामिदानीं
पुरेऽतिपूर्णां श्रियमादधाति ॥ २२ ॥

फलाभिलाषेण मुदा सदैव
द्विजैः समन्तादपि सेव्यमानः ।
सन्तापसन्तानहरः श्रितानां
तुलाविलासं स तवैव धत्ते ॥ २३ ॥

मन्दानिलान्दोलितनव्यसून-
सौरभ्यसाराहृतचित्तवित्ताः ।
यस्य प्रसूनैर्नियमसुधा
न मोघनक्षोभमपि सहयामः ॥ २४ ॥

न सम्पदा ते तुलनां कदापि
शतक्रतोरप्युपयाति लक्ष्मीः ।
अशेषसंसारविभूषणेन
सा भूष्यते किन्तु सुरद्रुमेण ॥ २५ ॥

आनन्दनिष्यन्दिसुधानिधानं
मनोरथो विग्रहवानिवायम् ।
त्वया तदासङ्गसमुज्झितस्य
विलासिनः केलिकलाकलापाः ॥ २६ ॥

मुकुन्द ! तन्मूलमुपागतस्य
या सौख्यसम्पत् समुदेति सद्यः ।
न सा सुधासाररसप्रवाहे
निमज्जतोऽपि क्वचिदुज्जिहीते ॥ २७ ॥

विना तमुद्दामतमं मुरारे !
न शोभते ते बत राजलक्ष्मीः ।
ताराधिपश्रीरपि शारदीया
निशेव हीना निजवल्लभेन ॥ २८ ॥

विहाय वैकुण्ठसुखानि भूमौ
तवावतीर्णस्य विलासहेतोः ।
सम्पूर्णमेवास्ति समस्तमुच्चै-
र्न्यूनन्तु तेनैव सुरद्रुमेण ॥ २९ ॥

आज्ञापयाज्ञापितया त्वद्धि-
र्सुरेन्द्रमभ्यर्थ्य तमा ग्रहस्य ।
परन्तु पारीन्द्रपराभहेतुः
न याचितं स्यादुचितेदयाय ॥ ४० ॥

निर्देशयादेशकरं तदस्मिन्
हत्ये गरुत्मन्तमनन्तवीर्यम् ।
स्थाता पुरस्तात् समरे न तस्य
मदोन्मदोऽपि त्रिदिवेन्द्रदन्ती ॥ ४१ ॥

दारिद्र्यदारी ननु दुर्गतानां
तारुण्यकारी च जरातुराणाम् ।
चिन्तामणिश्चिन्तितसन्ततीना-
मुपेक्ष्यते केशव ! किं स वृथः ॥ ४२ ॥

मयार्थ्यमानोऽपि मुहुः प्रसूनं
नचैकमप्यस्य ददौ महेन्द्रः ।
दुरीश्वराणां जगदीश्वरोऽसे-
र्मदो हि मेधामधरीकरोति ॥ ४३ ॥

कथञ्चिदुद्यानचरान् प्रसाद्य
मयाद्य हृद्यं कुसुमं तदेकम् ।
त्वदर्थमानीतमिदं प्रयत्नाद्
याच्ञापि पुण्या भवदर्शनाय ॥ ४४ ॥

न सम्पदा ते तुलनादृतेन
शतक्रतोरप्युपयाति धाम्नी ।
अशेषसंसारविभूषणेऽस्मिन्
सा भूष्यते किन्तु गिरं फणीव ॥ ३५ ॥

आनन्दसौरभ्यभराभिरामं
विलोक्य तल्लोचनलोभनीयम् ।
प्रसूनमुत्फुल्लमना सुरारिः
अग्रामधाद्यावि विरिञ्चिसूनोः ॥ ३६ ॥

ततस्तदादाय मुदा तदानी-
माघ्राय च क्षीरमुखारविन्दः ।
न्यवेशयत् केशचयेषु भैष्म्याः
प्रेमा नवः किं सहते विलम्बम् ॥ ३७ ॥

अथ प्रसूनामन्दमरन्दधारा-
मत्तालिमालारणितच्छलेन ।
अवाप्तवानमरनाथभावि-
सौभाग्यलीलाजयडिण्डिमोऽस्य ॥ ३८ ॥

उदारधाराधरमन्द्रनादान्
विडम्बयन् धीरतरस्वरेण ।
ततः स्मितोल्लासिमुखेन्दुरिन्दु-
प्रभं प्रभावातिशयं तमाह ॥ ३९ ॥

अवादि यन्मे मधुरं भवद्भि-
र्विजृम्भितं तत् त्वदनुग्रहस्य ।
परन्तु मित्रैः सममात्महेतुः
प्रायो विवादो न शुभोदयाय ॥ ४० ॥

मखैरसंख्यैर्विविधैस्तपोभि-
र्वधैः समूलैरपि दानवानाम् ।
सन्तोषणीयः किल योऽनुवेलं
कथं विरोध्यः स मया महेन्द्रः ॥ ४१ ॥

निदेशकारिण्यनुजे नितान्त-
स्निग्धेऽनुरक्ते मयि वासवस्य ।
यदा भविष्यत्यनघप्रसाद-
स्तदा स दाता स्वयमेव सर्वम् ॥ ४२ ॥

एवं वदत्यद्रिभिदोऽनुजेऽस्य
सन्तापसन्तानमवाप चेतः ।
समीहितासिद्धिविधौ हि नित्यं
मनो मुनीनामपि मोहमेति ॥ ४३ ॥

स्वस्त्यस्तु ते माधव ! साधयामो
भूयो भवद्दर्शनसौख्यमस्तु ।
उदीरयन्नेवमथ क्षणेन
सोऽन्तर्दधे प्राप्य हरेरनुज्ञाम् ॥ ४४ ॥

ततः प्रहृष्टोद्धतवीरयुद्ध-
कुतूहलालोककलाविलासी।
सत्योपमातुर्भवनं प्रविश्य
मुनीश्वरस्तामिदमाह हृत्तम् ॥ ४५ ॥

आकर्ण्य कर्णेजपया तया तद्
वचो महर्षिः प्रणिपातपूर्वम्।
विसर्जितस्तत् क्षणमेव हर्षा-
ज्जगाम धाम प्रमथाधिपस्य ॥ ४६ ॥

कलावती नाम कलास्वभिज्ञा
प्रणोदिताऽसौ मुनिनाथ वल्लभ्।
प्रवृत्तिमेता परितोऽस्य सत्यां
निकेतमस्याः सहसाससाद ॥ ४७ ॥

विनम्रवक्त्रा कितवेयमस्यैः
क्षितिं समुद्धय क्षणमास तूष्णीम्।
ततोऽस्य हेतुं सुदृशानुयुक्ता
निश्वस्य दीर्घं रहसीदमाह ॥ ४८ ॥

शुभ शुभे। कश्चिदुदारयोने।
शीलेन ते तोषमुपैति नाथ।
इतोऽस्ति सत्यं नहि सुन्दरीणा
सन्तोष्यते यद्दयितस्य चेतः ॥ ४९ ॥

जगत्त्रयेऽपि प्रथितं भवत्याः
सौभाग्यमप्याहतमम्बुजाक्षि ! ।
सम्भावनायां हि समुद्गतायां
ह्रासोऽवहासोदयमातनोति ॥ ५० ॥

सौन्दर्यगर्व्वेण हरेर्वधूनां
मूर्द्धिं त्वयादायि पदारविन्दम् ।
हेतोरतो भाविनि ! तावकीना
संख्यानगी कीर्त्तिरयेपलोकम् ॥ ५१ ॥

परस्परालापविलासकाले
कल्याणि ! सौभाग्यमदस्त्वदीयः ।
प्रसूयते विस्मितमानसाभिः
कदा मुदा न त्रिदशाङ्गनाभिः ॥ ५२ ॥

गुणैर्मनोज्ञैर्विमलैश्च शीलै-
रूपैरुदारैर्वयसा नवेन ।
त्वमम्ब ! पूर्णासि तथाप्यकस्मात्
कथं पतिस्तेऽद्य हतानुरागः ॥ ५३ ॥

प्रसादय शक्रं सति ! नारदेन
कथञ्चिदासादि सुरद्रुपुष्पम् ।
वात्सल्यतस्ते तदयं प्रदातु
पुरीमिमां प्राप समुत्सुकोऽसौ ॥ ५४ ॥

विहाय सत्राजितराजकन्यां
न काचिदन्यार्हति तत् पृथिव्याम्।
उद्भासिपीयूषमयूखबिम्ब-
विभूषणा सुन्दरि। रात्रिरेव ॥ ५५ ॥

त्वदर्थमेवाद्भुतपारिजात-
प्रसूनमानीतमनेन यत्नात्।
इमां समाकर्ण्य कुतोऽपि वार्त्तां
तं रुक्मिणीमत्सरयाजुहाव ॥ ५६ ॥

अतः शरच्चन्द्रमुखि। त्वदीयं
निकेतनं नाद्य मनागपि यायात्।
अनन्तवीर्य्यस्य हरेरनुज्ञा-
भङ्गाय कः स्यात् पुरुषः प्रवीरः ॥ ५७ ॥

समागतं सोऽथ समादरेण
तं पूजयामास मुदा तदानीम्।
ततः प्रसूनस्य कथाः समस्ताः
प्रस्तावयामास हसन् मुरारिः ॥ ५८ ॥

प्रवक्ष्यमानोऽप्यमुना वचोभि-
रबोधि सौगन्ध्यभरैरसौ तत्।
समुद्गतः शारदशीतरोचिः
प्रच्छः किमाच्छादयितुं करेण ॥ ५९ ॥

विचार्य्य पर्य्याकुलमानसेन
हरिस्तदायादि नतेन तेन।
परन्तु चामीक ! विधौ विरुद्धे
न सिद्धिमायान्ति समीहितानि ॥ ६० ॥

देवास्य पुष्पस्य कृते विनीता
सत्राजिती मां सततं ययाचे।
उपेन्द्र ! देवेन्द्रमपि प्रसाद्य
तदर्थमानीतमिदं मयाद्य ॥ ६१ ॥

इमामनादृत्य गिरं तदीया-
मादातुमैतद्विभुरिच्छति स्म।
दुरीश्वरे लोभपरे नराणां
काकाक्षयः किं फलिता भवन्ति ॥ ६२ ॥

स्वयं तदादाय कराम्बुजाभ्यां-
र्विद्योतमानामिव भाग्यलक्ष्मीम्।
विदर्भजायाः कवरीनिवेशे
निवेशयामास तदैव देवः ॥ ६३ ॥

सद्यस्तदासाद्य मदेन तस्याः
समुन्नसन्त्या मयि सावहेलम्।
विलोकितं यत् स्मितमुग्धमाशो-
दयापि तन्मे हृदयं दुनोति ॥ ६४ ॥

समं मुकुन्देन विदर्भजाया-
स्तदैकसिंहासनसङ्गतायाः ।
व्यलोकि या दीप्तिरुदाररूपा
न पारमागच्छति सा गिरां मे ॥ ६५ ॥

प्रद्यानवद्याङ्गि ! ममापि पुण्यै-
र्मन्ये समासादि हठेन श्रेयः ।
निकेतमागत्य यदच्युतस्य
सौभाग्यहानिस्तव हन्त दृष्टा ॥ ६६ ॥

समुद्गतायास्तव कीर्त्तिलक्ष्म्याः
सरोजमुग्धाक्षि ! ललाटपट्टे ।
मलीमसं त्वद्दयितस्य वृत्तं
कस्तूरिकालेपनतामुपैति ॥ ६७ ॥

निशेव चन्द्रस्य शिवेव शम्भोः
शचीव जिष्णोः कमलेव विष्णोः ।
सौभाग्यमासाद्य चिरं मुरारे-
रिमामवस्थां कथमागतासि ॥ ६८ ॥

भायमुदीर्णतरः किल ते यशो-
हिमरुचोऽद्यति लाञ्छनसञ्चयः ।
इति विचिन्त्य चिरं परितापतो
न हृदये मम देवि ! सुखोदयः ॥ ६९ ॥

इति वलति तदीये वाग्विलासे समन्त
दुपगतगुरुकोपाश्लेषशोणाननश्रीः ।
श्वसितमुपचितं यत् सा बभारानतभ्रूः
सफलमखिलकृत्यं तेन तेने महर्षेः ॥ ७० ॥

इत्थं वाग्विभवैरलीकपटाद्विजृम्भमाणैः शने-
रोपायेश्वममं विधाय सुतरां चित्तं कुरङ्गीदृशः ।
प्रीतिं प्राप हृदा तदेयमचिरादुल्लासफुल्लानना
संसिद्धेषु समीहितेषु लभते हर्षप्रकर्षं मनः ॥ ७१ ॥

इति वासुदेवविजये महाकाव्ये कुसुमप्रदानो
नाम द्वितीयः सर्गः ।



## तृतीयः सर्गः ।



अथ कोपपरीतचेतसा
घनबाष्पोद्गमकुण्ठकण्ठया ।
जगदे जगदेकभव्यया
दलदम्भोजदृशा शनैः शनैः ॥ १ ॥

करुणापरिपूर्णचित्तया
प्रचुरस्नेहरसाभिषिक्तया ।
मदनुग्रहतः प्रभो । त्वया
विदितं सर्व्वमिदं निवेदितम् ॥ २ ॥

विलसत्यपि चारुचन्दन
द्रवशीते गदिते तवाधुना ।
न मतिर्मम याति निर्वृतिं
हिमधाम्नीव रथाङ्गसहति. ॥ ३ ॥

तदनीतिकथानुतापितं
दृढपाषाणनिभं मदन्तरम् ।
जलवद्वचसाद्य सिञ्चसि
स्फुटनायैव परिस्फुट वत ॥ ४ ॥

अनुरागरसालसां सदा
विश्रान्तःकरणामनिन्दिताम् ।
किमलब्धि फलं मधुद्विषा
सहसा वञ्चयताबलामिमाम् ॥ ५ ॥

अधिगम्य तवास्यपङ्कजा-
चरितान्यथ शठस्य शार्ङ्गिणः ।
असवस्तरसैव मामकाः
किल कामं कलयन्ति निष्क्रमे ॥ ६ ॥

मलिना तनुरस्य यादृशी
कलितं हन्त तथैव मानसम् ।
कितवः कथमन्यथा तथा
रचयामास ममैव वञ्चनाम् ॥ ७ ॥

दधदन्तरतीव नीरसं
सरसं किन्तु बहिः प्रकाशयन् ।
विधिवञ्चितया मयाद्य किं
विदितो दुष्फलवन्न माधवः ॥ ८ ॥

कलयन्ननुकूलतां स मे
कथमद्य प्रतिकूलतामधात् ।
खदिरो मुखरागदः क्वचिद्
विरसधारतरः सदैव हि ॥ ९ ॥

हृदयादपि पूतनाद्विषो
हृदयं मे कठिनं हि वज्रवत् ।
समवाप्य विषादमीदृशं
शतधा यन्न हठेन दीर्यति ॥ १० ॥

परितः परितापकारिणा
परमस्नेहरसापहारिणा ।
हरिणा शिखिनेव साम्प्रतं
बत भीताक्षि दग्धाद्यामहम् ॥ ११ ॥

कुसुमं कुसुमेषुदुर्लभं
मुनिना स्नेहवशात्समाहृतम् ।
अथ तत् स्वयमेव तत्करा-
द्यताकारि न किं मुरारिणा ॥ १२ ॥

सुरपुष्पमवाप्य निर्भर-
स्फुरदुद्रिक्तमदोद्धतस्मितम् ।
अवलोक्य विदर्भनन्दिनी-
वदनं किं भवितात्र मे हृदि ॥ १३ ॥

अयमीदृगुपस्थितो महान्
मम हा हन्त नवः पराभवः ।
इह चेन्न जहामि जीवितं
सुभगं वर्त्म कलङ्कितं ततः ॥ १४ ॥

यशसास्तरश्मिचारुणा
जगदद्योति मया चिरादिदम् ।
अवमानकलङ्ककारिणा
हरिणा तन्मलिनीकृतं कुतः ॥ १५ ॥

किमपेक्ष्य निमित्तमञ्जसा
मयि वामोऽभवदम्बुजेक्षणः ।
अथवापकृतौ न कारणं
मलिनात्मामवलम्बते मनः ॥ १६ ॥

तव सन्तु शिवानि गम्यतां
विधिनैवाद्य कृता गतिर्मम ।
ज्वलति ज्वलने मुदा तनू-
स्तृणभावं सहसा गमिष्यति ॥ १७ ॥

सरलापि वधूः प्रियस्य हृत्-
स्खलिता याति खलु प्रतीपताम् ।
गलिता ललिता लता ध्रुवं
विटपिस्कन्धतटान्न जीवति ॥ १८ ॥

असुभिः सहसैव गम्यतां
परमेतत् तु परेशमर्थये ।
समुदेतु न-तेन शार्ङ्गिणा
मम योगो जननान्तरेष्वपि ॥ १९ ॥

इति रोषभरारुणाननां
मृदु सम्भाष्य तदा कलावतीम्।
घनवाष्पनिरुद्धभाषिता
सहसा मौनमुवाह मानिनी ॥ २० ॥

अथ सा सरला विचिन्त्य त-
द्धृदयारोपितरक्तमोषणम्।
बिसिनीव विलूनपङ्कजा
निममज्ज प्रसभं शुचाम्बुधौ ॥ २१ ॥

अतिमन्युविदूनमानसां
घननिःश्वासविशोषिताधराम्।
परिसान्त्वयितुं कलावती
स्तिमितावोमिति तामभाषत ॥ २२ ॥

अवमाननखिन्नमानसां
नववल्लीमिव वह्नितापिताम्।
भवतीमवलोक्य निर्भरं
प्रसभं कस्य मनो न दूयते ॥ २३ ॥

मुखमम्बुजकोषकोमलं
तव तन्वङ्गि! शुचा हृतद्युति।
तपनातपतापितो दिने
हिमधामेव मनो दुनोति मे ॥ २४ ॥

अयि बालमृगाक्षि! लक्ष्यते
वदनं ते निचितं घनाम्बुभिः।
अतिसान्द्रतुषारधारया
परिकीर्णं सरसीरुहं यथा॥ २५॥

मलिनं भवदाननं शुचा
हृदि तापं तनुते ममोत्सुकेः।
कुहिरेण तिरोहितो विधुः
कुमुदानां मुदमादधाति किम्॥ २६

त्यज खेदमुदारमानसे!
विरसे धातरि किन्न जायते।
सुखमीदृगवस्थमद्य ते
मम चेतः क्षमते न वीक्षितुम्॥ २७॥

गुणराजिविराजिता सता-
मपि मान्या चरितैश्च चारुणा।
त्वमवीदृशमागता दशां
किमसाध्यं विमुखस्य वेधसः॥ २८॥

यदुवीरदुरन्तचेष्टितै-
रयमस्तोकमुपैमुत्तमम्।
अपनेतुमिदं न शक्यते
वस जीवव्ययतोऽपि किं शुचा॥ २९॥

ललिताङ्गि ! विपद्विपोऽन्त-
द्विपोदन्ति सदैव दुर्द्धियः ।
अक्रमव्यवसायशालिनः
सुधियस्तु प्रथयन्ति पौरुषम् ॥ ३० ॥

स्पृहतामपि माननीयतां
त्वमुपेता निजसम्पवैभवैः ।
इदमम्ब ! कदापि नोचितं
यदविश्लेव चिरं विषीदसि ॥ ३१ ॥

भव भाविनि ! सुस्थमानसा
सहसा चेत्स्यति ते समीहितम् ।
तदुदेति जगत्त्रयेऽपि किं
यदलभ्यं मम बुद्धिसम्पदा ॥ ३२ ॥

विरहीहि वयं नहीदृशो
भविता कोऽपि परिश्रमः शुभः ।
परमुक्तसिद्धिसाधन
वचनं मे कलयावधानतः ॥ ३३ ॥

सुतमित्यघभारभङ्गुरां
भुवमालोक्य दयार्द्रमानसः ।
नरवेशधरः परः पुमा-
नवतीर्णो वसुदेवसद्मनि ॥ ३४ ॥

रचितेऽपि तनूव्यये त्वया
परिपूर्णस्य तदस्य किं कृतम् ।
किमुदेति समुद्गते पयः-
पृषते शोकविधिः पयोनिधिः ॥ ३५ ॥

अथ वृत्तमवेत्य चेदसौ
भविता भामिनि ! खिन्नमानसः ।
अवमाननमद्य दारुणं
किमनेनैव तवापनीयताम् ॥ ३६ ॥

तदिमं व्यवसायमञ्जसा
दलदम्भोजदलाक्षि ! दूरय ।
नहि ते चरिते नतभ्रुवा-
मयशोदायिनि दीयतां मतिः ॥ ३७ ॥

अपराधविधायिनि स्फुटं
दयिते कार्यदृशां मृगीदृशाम् ।
नृपनन्दिनि ! नान्यदीष्यते
ननु मानान्निजसिद्धिसाधनम् ॥ ३८ ॥

सुतनु ! त्वमतः प्रकल्पय
प्रसभं मानमुदारचेतसि ।
न विधेयविधौ विलम्बिता
किल कुत्रापि शिवाय जायते ॥ ३९ ॥

अनुनेष्यति दूनमानसो
भवतीं मानवतीं सनातनः।
अथ तत्र वशत्वमागते
किमलभ्यं जगतीतलेऽखिले ॥ ४० ॥

नियतं त्वयि भावितो यथा
न तथान्यासु सुरारिरोक्ष्यते।
कुलशीलवयःकलावती
भवतीवास्ति किमन्य ! काचन ॥ ४१ ॥

स्वयमप्यनुनेतुमागतो
नहि वाच्यः किमपि त्वया हरिः।
त्वदुभाषिणि ! मानशालिना-
मवलम्बः खलु मौनमुच्यते ॥ ४२ ॥

अथ मन्युमवेत्य माधवो
भविता काकुवचःपरायणः।
कुतुकेन तदार्थयस्व तत्
सुरसूनं हृदयेश्वमात्मनः ॥ ४३ ॥

अनुरागरसार्द्रमानसो
भवदुक्तं प्रतिपत्स्यते विभुः।
प्रतिपन्नमतो जगत्पतौ
सुरशाखी भवनाय एव ते ॥ ४४ ॥

न मनागपि तस्य सम्भवेत्
सुरपुष्पाहरणे परिश्रमः।
अधिगम्य तदीयमीप्सितं
मघवा तत् स्वयमेव दास्यति ॥ ४५ ॥

कुसुमप्रभवावमानना-
मसुनैव त्वमपाकुरु द्रुतम्।
स्फुरति प्रखरे दिवाकरे
क्रियते किं तमसा पदं क्वचित् ॥ ४६ ॥

घनमानतरङ्गिणीपयः-
प्रकरैर्मौनपयोदवर्द्धितैः।
अवधीरणपङ्कदूषितां
सुसखि! क्षालय कीर्त्तिमात्मनः ॥ ४७ ॥

अयमद्य मया निवेदित-
स्तव धर्मोद्विधायको विधिः।
हृदयं विनिधेहि सिद्धये
परिसिध्यन्तु शुभे! मनोरथाः ॥ ४८ ॥

अधुना तव मङ्गलार्थिनी
गिरिजामर्चयितुं व्रजाम्यहम्।
इति सा समुदीर्य्य सादरं
तरसा तद्भवनाद् बहिर्ययौ ॥ ४९ ॥

वलिताः स्वयमेव तद्रुचः
प्रथिमानं प्रययुस्तदुक्तिभिः।
सुहृदा हि नभस्वता भृशं
भजते भीषणतां हुताशनः ॥ ५० ॥

अथ सा सहसा मनस्विनी
सकलं हन्त विभूषणं जहौ।
प्रबलाधिविधूतचेतसो
न भवेत् क्वापि कदापि निर्वृतिः ॥ ५१ ॥

शयनं परिहृत्य भामिनी
कमनीयं कुमुदेन्दुसुन्दरम्।
अपिधाय पटाञ्चलेन सा
वदनाब्जं निषसाद भूतले ॥ ५२ ॥

घनमानविदूनचेतसः
स्फुरदम्भोजदृशो मुखश्रिया।
जलदेन तिरोहितैकतो
विजिता शीतकरद्युतिस्तदा ॥ ५३

दिशि यत्र विलोललोचना
निदधे सैकपदे दृगञ्चलम्।
ग्रथिता इव तत्र रेजिरे
परितः शोणसरोजराजयः ॥ ५४ ॥

अधरेण तदा नतभ्रुवो
घननिःश्वासविशेषकम्पिना ।
समलम्भि तुलानिलाहति-
स्फुरता बालदलेन बोरुधः ॥ ५५ ॥

अनया हृदयान्तरस्फुरद्-
गुरुकोपानलतप्यमानया ।
विहिताः श्वसितानिलोर्मिभि-
र्दरधूमोत्करधूसरा दिशः ॥ ५६ ॥

सुतरां क्षयतामुपागतां
शशिलेखामिव तामनिन्दिताम् ।
सहसानुययुः समन्ततः
सहचर्यः सहजा इव त्विषः ॥ ५७ ॥

गुरुरोषभरारुणाकृतिः
परितापेन मुहुः प्रसर्पता ।
अथ ताभिरमानि मानिनी
ज्वलयन्तीव शिखा शिखावतः ॥ ५८ ॥

व्यजनं व्यजनं जलं जलं
घनसारो घनसार इत्यभूत् ।
अवरोधघटेषु योषितां
कुररीणामिव कातरो ध्वनिः ॥ ५९ ॥

प्रतिकारपरायणा द्रुतं
हृदि दाहोपशमाय सुभ्रुवः ।
घनचन्दनसङ्गशीतलं
नलिनीकोमलपत्रमं दधुः ॥ ६० ॥

कदलीदलमन्दमारुतै-
र्विसिनीपल्लवसंस्तरैरपि ।
न शशाम तदा स्मरोद्भवः
परिपूर्णः परितापपावकः ॥ ६१ ॥

रुजमङ्गदृशो व्यपोहितुं
नियतिं दैवविनिर्मितामिव ।
अथ ता न तथाप्यशक्नुवन्
घटमाना इव हन्त नीतयः ॥ ६२ ॥

अनुतापभरोऽधरोष्ठया
क्षुभितं लोहितलोपनत्विषा ।
सुदृशश्चतुरैः सखीजनै-
र्व्यजनव्यानुमितं तदाश्रुभिः ॥ ६३ ॥

मुहुर्व्यजनवीजनैः शिशिरचन्दनासेचनैः
सरोजदलसंस्तरैरपि न चेष्टते सुन्दरी ।
परन्तु हरिनामनि प्रियसखीभिरावेदिते
निवेदयति जीवितं श्रवणसीम्नि रोमोद्गमः ॥ ६४ ॥

इति विविधविधानव्यापृतानां तदानीं
सरसिजनयनानां वाग्भिरत्याकुलाभिः ।
रुदितमिव वितेने हन्त शुद्धान्त उच्चै-
र्व्यथयति भुवि कं वा बान्धवानां विपत्तिः ॥ ६५ ॥

इति वासुदेवविजये महाकाव्ये सत्यसन्तापो
नाम तृतीयः सर्गः ।



## चतुर्थः सर्गः ।



तामिन्दुसुन्दरमुखीमतिखिन्नरूपां
दावाहितामिव लतामवलोकयन्त्यः ।
सान्द्राम्बुपूर्णनयनाः प्रमदास्तदानीं
शोकाम्बुधौ निरवधौ सहसा ममज्जुः ॥ १ ॥

कर्पूरपूरपरिपूर्णमुशीरसिक्त-
मानीय वक्षसि निवेशितमम्बुजाक्ष्या ।
देहोष्मभिर्द्रुतमवाप्य करीषभावं
श्रीखण्डपङ्कमपि तापमधात् प्रकामम् ॥ २ ॥

तेने तुषारघनसारकरम्बितेन
पाथोजिनीनवदलेन शनैः समीरः ।
तेनापि नाप तनुतापभरः प्रशान्तिं
सिध्यन्ति किं हतविधौ समभीप्सितानि ॥ ३ ॥

काचिद्दधौ वपुषि कोमलपल्लवानि
काचिन्मृणालवलयावलिमाबबन्ध ।
काचिच्चकार तरसा घनसारसार-
धूलीभरेण परिपूरितमङ्गमस्याः ॥ ४ ॥

धाराग्टहेषु नलिनीदलकल्पितेषु
शान्तेषु चन्दनरसेषु सुशीतलेषु।
कुत्रापि निर्वृतिमवाप न सत्यभामा
सूनं जलार्द्रमपि शय्यति कन्तलूनम् ॥ ५ ॥

एवंविधे विपुलतापभृते तदानीं
तस्याः सरोरुहमुखी भ्रमसुज्झिहाने।
आख्यातुमेतदवलम्बितमुत्कचित्ता
काचित् सखी मुरभिदं समया प्रतस्थे ॥ ६ ॥

कुन्देन्दुबिन्दुविशदाम्बरयाङ्गनस्थे
देवेन्द्रगोपसदृशे शयने निषण्णम्।
व्याकोषकुम्भसरसीरुहकर्णिकान्तः-
ससक्तषट्पदरुचिं स्वरुचा हरन्तम् ॥ ७ ॥

आकुञ्चितेक्षणदले दरहासभासि
स्निग्धात्कपोलफलके कुटिलालकान्ते।
कस्याश्चिदाननविधावपि चिन्तितायाः
शौत्कण्ठमक्षियुगलं विनिवेशयन्तम् ॥ ८ ॥

आलोक्य तं विदलिताञ्जनपुञ्जभासं
विभ्राजमानशतपत्रसमाननेत्रम्।
सन्नम्य नम्रशिरसा तरसा रसार्द्रं
प्रोवाच सा किमपि चाटुगिरामभिज्ञा ॥ ९ ॥

या मौलिभूषणमशेषनितम्बिनीनां
सम्मोहनायुधमुदारमपि स्मरस्य।
निर्माणकर्मणि विधेरपि कीर्त्तिलक्ष्मीः
सा नः सखी सपदि सीदति दैव! किं स्यात्॥१०॥

सत्वं किमु प्रमुषितं रतिनायकस्य
सौन्दर्यसारसरसीमपि नीरसां वा।
किं वा जगद्विलसिताभरणं विधातुं
सङ्केतितस्य सहसा पिशुनो विधाता॥ ११॥

सद्यस्तुषारघनसारपटीरपङ्कै-
रासेव्यते सततमेव सखीसमूहैः।
सा दुर्निवारविषवेगवशीकृतेव
न क्वापि निर्वृतिमुरीकुरुते वराकी॥ १२॥

आकर्ण्य कर्णविरसं सुदृशो वचस्तद्-
गाढानुरागरसभावितमुग्धचित्तः।
निःश्वस्य दीर्घमवलोक्य दिशोऽपि शून्या,
गन्तुं प्रियावधिमेष तदोद्यतिष्ठत्॥ १३॥

आकर्णिते खलु तदीयदशाविशेषे
शोकाभिभूतमनसो मधुसूदनस्य।
यः सम्भ्रमोऽभवदुदारतरः स एव
सर्वोपरि प्रणयमाशु जगाद सख्याः॥ १४॥

सद्यःस्मृतप्रियतमापरमाहितेन
तेनार्तिभीतिविवशीकृतमानसेन ।
तद्वेश्मनिःसृतिविधौ पदवी तदानीं
ज्ञाता मुहुः परिचितापि चिरेण चिक्लैः ॥ १५ ॥

आपादपद्मकलितां वरवैजयन्ती-
मुद्भ्रान्तभावितविरोधितया तदानीम् ।
अंसे निवेशयति शार्ङ्गिणि शीर्णसूत्रा-
द्विश्लिष्य कौस्तुभमणिर्विरराम भूमौ ॥ १६ ॥

सौदस्पदं स्खलदशेषविभूषसुखैः
स्विद्यत्कपोलदलमुच्छ्वदुदीर्णवेगम् ।
श्रयन्मुखाम्बुजमपि स्वमदोषयान्तं
तवाततान गतमाकुलमाकुलोऽसौ ॥ १७ ॥

दूराद्विहित्य सवयोगणसंविधानैः
संकुचितं हृदयतापभरं क्षमाङ्ग्याः ।
सोत्कण्ठमुच्छ्वसितनेत्रसरोजपत्रः
कण्ठात् प्रियासदनमाशु समाजगाम ॥ १८ ॥

आविश्य तत्र शिशिरर्तुनिवासकल्पं
यत्नादलक्षित इव त्वरया मृगाक्ष्या ।
प्रोवाच तत्सहचरीर्निभृतं तदासौ
चास्वे·षादपि भयतोमिरहं त्रिपेद्य ॥ १९ ॥

लावण्यनिर्मलविकाशविशेषशेषां
सम्बिभ्रतीं तनुलतां ललितां कथञ्चित् ।
स्निग्धप्रवालकमनीयकपोलरुच्या
संफुल्लपाटलरुचिं परिशोलयन्तीम् ॥ २० ॥

अन्तर्गतैर्नवविषादभरैरतीव-
मालिन्यपूर्णवदनां लुठितालकान्ताम् ।
नैराश्यवह्निशिखया परितापिताङ्गीं
बालां वियोगविधुरामिव शोचनीयाम् ॥ २१ ॥

उज्जृम्भमाणपृथुकोपसमुद्भवेन
कम्पेन कम्पितपयोधरभूधरेण ।
शोणेन लोचनयुगेन च सूचयन्ती-
माकस्मिकं कमपि दुर्विनयं प्रियस्य ॥ २२ ॥

व्याकीर्णनीलकचभारघनान्धकारां
देदीप्यमाननयनांशुतडित्प्रतानाम् ।
निष्पन्दतामुपगतां मधुरां प्रकृत्या
कादम्बिनीमिव तपप्रतिरुद्धवर्षाम् ॥ २३ ॥

आकुञ्चिताङ्गुलिदलेन पदाम्बुजस्य
भूमीतले किमपि निर्भरमालिखन्तीम् ।
तामुष्णनिःश्वसितनिर्भरधूमधारा-
सम्भाररुध्यदधरां सुरजिद्ददर्श ॥ २४ ॥ कुलकम् ।

विज्ञातलोकचरितचरितेन तेन
तस्या विवेद हृदयं सुदृशस्तदासौ ।
संलक्ष्य लक्षणविदो बहिरेव लक्ष्म
क्ष्मागर्भगामपि खनिं नहि किं विदन्ति ॥ २५ ॥

निर्णीय मानमनुमानपरम्पराभि-
र्लावण्यशेषमपि वीक्ष्य वपुः प्रियायाः ।
दोदूयमानमनसा सुरनायकेन
भेजे भयं करुणयानुगतं प्रसह्य ॥ २६ ॥

पश्चादुपेत्य निभृतं व्यजनं तदानी-
मानीय तत्सहचरीकरतः कथञ्चित् ।
तेनाततान तनुतापशमाय तन्व्याः
स्वैरं समीरणमधीरमनाः स यत्नात् ॥ २७ ॥

अत्रान्तरे रुचिरदेवतरुप्रसून-
संसर्गवासिततनोर्मधुसूदनस्य ।
तत्राविरास नवनिर्भरसौरभश्रीः
कीर्तिर्मनोरमगुणादिव सज्जनस्य ॥ २८ ॥

आमोदमुद्गतममानुपमत्युदारं
संसारसारमुपलभ्य मनस्विनी सा ।
चित्तेन निर्वृतिमवाप मनाक् तदानीं
नालङ्कृते जगति को हि गुणेन मोदम् ॥ २९ ॥

लावण्यनिर्मथविकाशविशेषशेषां
सम्बिभ्रतीं तनुलतां ललितां कथञ्चित् ।
स्निग्धप्रवालकमनीयकपोलरुच्या
संफुल्लपाटलरुचिं परिघोलयन्तीम् ॥ २० ॥

अन्तर्गतैर्नवविषादभरैरतीव-
मालिन्यपूर्णवदनां लुठितालकान्ताम् ।
नैराश्यवह्निशिखया परितापिताङ्गीं
बालां वियोगविधुरामिव शोचनीयाम् ॥ २१ ॥

उज्जृम्भमाणपृथुकोपसमुद्भवेन
कम्पेन वेपितपयोधरभूधरेण ।
शोणेन लोचनयुगेन च सूचयन्ती-
माकस्मिकं कमपि दुर्विनयं प्रियस्य ॥ २२ ॥

व्याकीर्णनीलकचभारघनान्धकारां
देदीप्यमाननयनांशुतडित्प्रतानाम् ।
निष्पन्दतामुपगतां मधुरां प्रकृत्या
कादम्बिनीमिव तपप्रतिरुद्धवर्षाम् ॥ २३ ॥

आकुञ्चिताङ्गुलिदलेन पदाम्बुजस्य
भूमीतले किमपि निर्भरमालिखन्तीम् ।
तामुष्णतश्वसितनिर्भरधूमधारा-
सम्भारधूम्यदधरां सुरजिद्ददर्श ॥ २४ ॥ कुलकम् ।

विज्ञातलोकचरितश्चरितेन तेन
तस्या विवेद हृदयं सुदृशस्तदासौ ।
संलक्ष्य लक्षणविदो बहिरेव लक्ष्म
चागर्भगामपि खनिं नहि किं विदन्ति ॥ २५ ॥

निर्णीय मानमनुमानपरम्पराभि-
र्लावण्यसीममपि वीक्ष्य वपुः प्रियायाः ।
दोदूयमानमनसा सुरनायकेन
भेजे भयं करुणयानुगतं प्रसह्य ॥ २६ ॥

पश्चादुपेत्य निभृतं व्यजनं तदानी-
मानीय तत्सहचरीकरतः कथंचित् ।
तेनाततान तनुतापगमाय तन्व्याः
स्वैरं समीरणमधीरमनाः स यत्नात् ॥ २७ ॥

अत्रान्तरे रुचिरदेवतरुप्रसून-
संसर्गवासिततनोर्मधुसूदनस्य ।
तत्राविरास नवनिर्भरसौरभश्रीः
कीर्तिर्मनोरमगुणादिव सज्जनस्य ॥ २८ ॥

आमोदमुक्तमसमानुपमत्युदारं
संसारसारमुपलभ्य मनस्विनी सा ।
चित्तेन निर्वृतिमवाप मनाक् तदानीं
नालम्बते जगति को हि गुणेन मोदम् ॥ २९ ॥

सौगन्ध्यमेतदुदियाय कुतः समन्ता-
दित्यादरात् सहचरीरथ सान्वयुङ्क्त ।
ऊचुर्न किञ्चिदपि चारुगिरस्तदाख्यो
भ्रूभङ्गिभिर्मुरभिदा बहुशो निषिद्धाः ॥ ३० ॥

मौनावलम्बिनि सखीनिवहे मृगाक्षी
संवीज्यते स्म परितो हरितोऽनुवेलम् ।
मन्दायमानमहसि व्यजनं दधाने
तत्रापपात वनमालिनि दृष्टिरस्याः ॥ ३१ ॥

आलोकिते मुरहरे नयनं तदानी-
मेणीदृशो द्विगुणशोणिमसान्द्रमासीत् ।
प्रायोऽपराधिषु विलोचनगोचरेषु
तेजस्विनामतितरां हि रुषो भवन्ति ॥ ३२ ॥

मन्युघ्नाणघनमानकथानुतप्ता
निःश्वासशोषितवराधरपल्लवश्रीः ।
व्यावर्त्य तद्वदनतो नयनारविन्दं
नम्रानना सुचिरमेव भुवं लिलेख ॥ ३३ ॥

रोषातिरेककलुषायितचित्तवृत्ति-
मुन्नीय नीतिनिपुणो दयितामथासौ ।
निष्यन्दमानमकरन्दविनिन्दि वाक्य-
मानन्दकन्दलमिवेन्दुमुखीमवादीत् ॥ ३४ ॥

तल्पं सुकोमलदुकूलतयानुकूलं
हा हन्त शारदसुधाकिरणाभिरामम् ।
त्यक्त्वा शिरीषसुकुमारशरीरवल्लि !
भूमीतले ननु निषीदसि कस्य हेतोः ॥ ३५ ॥

यस्याभिरामतमधामजितः कलङ्क-
मङ्केन सुन्दरतरोऽपि विधुर्दधाति ।
सौन्दर्यसारसदनं वदनं तदद्य
कल्याणि ! किं मलिनिमानमुरीकरोति ॥ ३६ ॥

इन्दीवरद्युतिविलम्बिविलोकितेन
यत् सौख्यसागरमुदारतरं ततान ।
शोषायमाणमधुनाधिमुखं तदेव
कान्ते ! कथं मम दुनोति मनोऽनुवेलम् ॥ ३७ ॥

आनन्दकन्दलदुहासमुधानिधानं
वामोरु ! ते वदनपार्वणशर्वरीशः ।
धत्ते तुलां तुहिनभङ्गमदूषितस्य
हा हन्त सम्प्रति सरोरुहकोरकस्य ॥ ३८ ॥

यत्स्पर्शनादपि समिद्धसुधासमुद्र-
सङ्गाहनादिव सुखानि समुल्लसन्ति ।
तत्रैव सर्पति तनौ तव तन्वि ! तापः
पापस्य किं हतविधेरविधेयमस्ति ॥ ३९ ॥

मज्जीवितप्रियतरे ! नहि तावकीनं
स्वप्नेऽपि विप्रियमकारि मया कदापि ।
तत् किं शुभे ! शशकशोणितशोणिमान-
मालम्बते सपदि ते नयनारविन्दम् ॥ ४० ॥

वामासि वामनयने ! मयि सानुराग-
मुल्लासय ! स्मितसुधामधुरं मुखेन्दुम् ।
आनन्दवारिधिनिवेदृ चिरं समन्ता-
दालोकवान् भवतु भाविनि ! जीवलोकः ॥ ४१ ॥

सद्यो निवेदय कृशोदरि ! किं निमित्त-
मुज्जृम्भते सपदि तापभरस्त्वदीयः ।
त्वामीदृशीं समवलोकयतो ममाम
मुद्वेजिता यदसवः प्रथमं भवन्ति ॥ ४२ ॥

एवं विधानि विविधानि सुपेशलानि
पत्युर्वचांसि सुतरां श्रुवती निशम्य ।
नम्रानना निविडबाष्पभरं निरुध्य
तन्वी चिरादिदमुवाच वचो विनीतम् ॥ ४३ ॥

शीलोच्चयेन विमलेन शुभैश्चरित्रै-
र्मान्याः समस्तभुवनेषु भवन्त एव ।
श्रीमल्लान्छन ! कदापि भवादृशेषु
स्त्रिभिर्न किमाचरति कोपविजृम्भितानि ॥ ४४ ॥

पीताम्बर ! प्रचुरपुण्यवशाद्भवन्त-
मासादयन्ति दयितं खलु वामनेत्राः ।
शैवं मनोज्ञमवलोक्य च ते न युक्तं
मानाभिधानमपि हन्त मनस्विनीनाम् ॥ ४५ ॥

प्राणेश्वराद्य नहि कोपकषायितास्मि
नाथानुनाथनकृतेन वृथा प्रयासः ।
मद्दैववैभवमिदं त्वयि जीवनाथे
यज्जायते बत मनागपि चित्तखेदः ॥ ४६ ॥

उक्त्वेति सा घनकुचस्तबकानताङ्गी
श्वासोत्करैर्विलुलिताधरपल्लवाग्रा ।
मानेऽरुणे समुदिते ललितेव नीरै-
र्नेत्राम्बुदान्निपतितैरवनिं सिषेच ॥ ४७ ॥

इत्थं निशम्य सुदृशः समुदीरितानि
खेदादसौ सपदि मुग्धमना बभूव ।
आगत्य नीतिनिपुणाथ सखी तदीया
काचित् तदा ललितमाधवमावभाषे ॥ ४८ ॥

एणीदृशः कुपितकारणमत्युदीर्ण-
माकर्णितं सकरुणं करुणामयाद्य ।
अज्ञानहेतुजनिता हि दृशां विकाराः
प्रायः प्रभो ! दुरपनेयतमा भवन्ति ॥ ४९ ॥

गीर्वाणसंसदि सहस्रदृशः प्रसाद-
मासाद्य हृद्यतरमद्य दिवः प्रसूनम् ।
एकान्तभक्तिभरभावितमानसेन
देवर्षिणा प्रभवते भवते प्रदत्तम् ॥ ५० ॥

तद्देव ! देवकुसुमं सविधस्थितायै
दत्तं तदैव भवतापि विदर्भजायै ।
प्रायः प्रसादमधिकं हि महानुभावाः
स्नेहात् सदा सविधवर्त्तिषु वर्त्तयन्ति ॥ ५१ ॥

सौभाग्यसारसमुदायनिकेतनं त-
च्छ्रुत्वा समुन्नतिविधायि विभो ! सपत्न्याः ।
सद्यः समुल्लसदसीममनोऽभिताप-
पाथोनिधौ निरवधौ सुमुखी ममज्ज ॥ ५२ ॥

तन्नाथ ! नायमनुनायनयानुतापः
शक्योऽपनेतुमरविन्ददृशः कदापि ।
तापोद्गमं शमयितुं धरणीस्थपत्त्रीं
किं नीरदः प्रभवति स्तनितानि तन्वन् ॥ ५३ ॥

काकूक्तिभिः समनुनीय भृशं कृपाङ्गी-
मङ्गीकरोतु सुमनःसुमनःप्रदानम् ।
एतावता मसुदिता भविता सखी नो
नो चेत् तदद्य भवनीयमनर्थजालैः ॥ ५४ ॥

सस्नेहमेतदभिधाय विभोः पुरस्ता-
न्मौनं सरोरुहमुखी चिरमाबभार ।
अन्दासमद्भुमदयस्तदयं दधार
हृद्योपदेशमिव चेतसि किमतोऽपि ॥ ५५ ॥

प्रेयानथ प्रणयिनीं मृदुहासपूर्व-
मासेचयन्निव सुधामयकान्तिपूरैः ।
मानापनोदनमुदारमनास्तदानी-
मानन्दनं वचनमिन्दुमुखीमवोचत् ॥ ५६ ॥

तन्वि ! क्षमां हृदि विधेहि निधेहि दृष्टिं
कामं मया विरचिताः शतशोऽपराधाः ।
विप्रेक्षणं यदि न पश्यसि पक्ष्मलाक्षि !
निर्गम्यतां मदसुभिः प्रथमं तदद्य ॥ ५७ ॥

त्वन्मुखेन्दुरुचिरा चटुकारतारा
चञ्चुचकोरमिथुना चिकुराभ्रकान्ता ।
सामण्डहारगिरिशिथिरामुकरम्बिताङ्गी
श्यामापि मे वितनुषे मनसि प्रकाशम् ॥ ५८ ॥

उक्त्वा रसार्द्रमिति चाटुपरायणेन
स्वैरं सरोरुहदृशः सविधं समेत्य।
दोर्भ्यां विधूतकिसलावलिवल्लिकल्प-
मालम्बि तत्करयुगं मधुसूदनेन ॥ ६० ॥

योगस्थितामिव तदा दरमीलिताक्षीं
नैदाघबाललतिकामिव घर्मदिग्धाम्।
आश्वास्य तां च बिसिनीमिव कण्ठकाढ्या-
मङ्कीचकार सुरसूनमसौ प्रदातुम् ॥ ६१ ॥

विद्राव्य देवनिवहानवहेलयैव
निर्जित्य शौर्यविभवेन सुराधिराजम्।
यद्यानयामि न नितम्बिनि! पारिजातं
भूयास्तदा सुमुखि! मे विमुखी प्रकामम् ॥ ६२ ॥

एवं गिरा रुचिरया शपथैरनेकै-
र्माने घने मधुभिदा सुदृशोऽपनीते।
सन्ध्यारुणाम्बरमनोहरकान्तिरस्यै-
राविर्बभूव शरदिन्दुमुखीसखीव ॥ ६३ ॥

एणीदृशः सपदि लोचनशोणिमानं
सन्ध्या दधार परितापभरं रथाङ्गी।
अन्तर्व्यथाविविधतापकदर्थनाभिः
सार्धं हरेरपि तदास्तमियाय भानुः ॥ ६४ ॥

नयनं जगतामधीशितु-
र्विमलानामवलम्बनं रुचाम्।
निपपात तथापि भास्करः
स्वपदात् स्वच्युतये हि वारुणी ॥ ६५ ॥

मिहिरेऽस्तमिते निमीलिता
नलिनी विष्णुपदं मलीमसम्।
विरहाकुलिता च चक्रिणी
तनुते किम विपन्महौजसाम् ॥ ६६ ॥

यतः पतिस्तत्र पतिव्रतापि
यातीति सञ्चिन्त्य तदा दिनश्रीः।
ताराच्छलेनेव विकीर्य लाजान्
रक्ताम्बरेयं पतिमन्वयासीत् ॥ ६७ ॥

अथ तरुणतमालपल्लवाना-
मपि लघयन् परमाभिरामभासः।
गद इव नयनावरोधकारी
द्रुतमकरोज्जगदन्धमन्धकारः ॥ ६८ ॥

आलिम्पन्निव निर्भरं दश दिशः कालागुरूणां द्रवै-
रातन्वन्निव भूषणं त्रिजगतः सान्द्रेन्द्रनीलोपलैः।
तन्वं संपरिकल्पयन्निव दिवक्षापिञ्छवसोद्दलैः
मध्यागं भ्रममुन्नलाय घनघोरो गाढान्धकारोत्करः ॥ ६९ ॥

नक्षत्रमालारुचिरां समन्ता-
न्नभःश्रियं वीक्ष्य तदीर्ष्ययेव ।
प्रदीपपुञ्जच्छलतो धरित्री
नक्षत्रमालां हृदये दधार ॥ ७०॥

निजैर्ज्योत्स्नाजालैर्जगदमलयँल्लोचनपुटीः
पटीराम्भःसेकैरिव सकललोकस्य सुखयन् ।
सुशीतामातन्वन् तपनपरितप्तां वसुमती-
मतीवस्फीतश्रीर्विधुरपि तदानीमुदगमत् ॥ ७१ ॥

लीलाद्युतौ विरतिभाजि यदन्धकारः
वारांनिधौ निरवधौ जगदाममज्ज ।
द्रागुद्यता तदुदधारि करोत्करेण
शीतांशुना किमुत धाम सतामशक्यम् ॥ ७२ ॥

शुभ्रे ऽनिशाकरकरैर्गगने ऽतिमन्द-
मावाति कैरववनीपवने मनोज्ञे ।
सार्धं तया दयितया परिपूर्णकामो
दामोदरः कुसुमतल्पमलञ्चकार ॥ ७३

इति वासुदेवविजये महाकाव्ये सप्रतिज्ञमाधवो
नाम चतुर्थः सर्गः ।

---

# पञ्चमः सर्गः ।



अथोद्यतो भानुमतो मयूखै-
रुल्लासितायां दिशि वासवस्य ।
आबोधयन् माधवमत्युदारै-
र्वैतालिका निर्मलवाग्विलासैः ॥ १

आनन्दमम्भोजवनीमिदानी-
माश्वासयन् देव ! करप्रचारैः ।
भद्राणि कोकावलिशोकमुद्रा-
विद्रावणस्ते सविता तनोतु ॥ २ ॥

समाक्रमद्भिः सहसा दिगन्तान्
विराजमानस्य रवेः करौघैः ।
अयत्नमत्तापैरिव वैरिभूपाः
प्रभो ! निरस्ता निबिडान्धकाराः ॥ ३ ॥

कृता समन्तान्नयनावरोध-
विधायिना या तिमिरोत्करेण ।
मुद्रागदद्वार इव त्रिलोक्या-
स्तामापरं भानुरधः करोति ॥ ४ ॥

समुद्गते सम्प्रति तीक्ष्णरश्मौ
सद्यः सरागाणि सरोरुहाणि ।
समागते प्रेयसि सन्निधानं
स्त्रीणां मनांसीव समुल्लसन्ति ॥ ५ ॥

सरोजसौरभ्यभरानुदारान्
समुद्गिरन्तः परितो दिगन्ताः ।
नूनं मनः कैरवविप्रयोगा-
दिन्दिन्दिराणामभिनन्दयन्ति ॥ ६ ॥

विधौ विरुद्धे निशि वारिजानां
गर्भेषु दुःखेष्विव हन्त मग्नाः ।
मधुव्रताः पुण्यमिव प्रभात-
मासाद्य सद्यः सुखिनो भवन्ति ॥ ७ ॥

उल्लुण्ठितारो नलिनीवनीनां
विलम्बितारो ललनालकेषु ।
सङ्गाहितारः सरितां दिशन्तु
प्रातस्तनास्ते पवनाः शुभानि ॥ ८ ॥

अपूरि लोकः किल कान्तिपूरै-
रदूरि भूरिर्निविडान्धकारः ।
अहारि शोकोऽच्युत ! कोकयूनो-
रकारि किं नोदयतारुणेन ॥ ९ ॥

प्राणेशकण्ठार्पितबाहुमूला
जालान्तरालादवलोकयन्त्यः ।
कान्ताः समाकुञ्चितलोचनान्तै-
र्दिशन्ति भानौ घनशोणिमानम् ॥ १० ॥

संश्लेषलेशादलसायमाने
प्रोन्मीलयं द्राङ् नयने मुकुन्द ।
रोचिर्विचित्रं शतपत्रपत्रं
चिरार्जिताहर्द्युतिमुज्जहातु ॥ ११ ॥

निद्राविनोदं भवति प्रयाते
पयोनिधिः पूर्णदशामुपैति ।
स्नानार्थमानीय पयांसि सद्य-
स्तमाशु संशोषय शुभकीर्त्ते ॥ १२ ॥

निशम्य हर्षादिति मागधानां
स्निग्धानि मुग्धानि निवेदितानि ।
समुल्लसल्लोचनपद्ममुद्रां
विद्रावयामास तदा मुरारिः ॥ १३ ॥

आमृश्य नेत्रे प्रतिमुच्य हारं
नियम्य लोलालकपल्लवानि ।
भृशालसाङ्गी पतिभक्तियुक्ता
तत्याज सत्या शयनं पुरस्तात् ॥ १४ ॥

उद्धूय युग्मं भुजयोस्तताङ्गी
विजृम्भमाणा चणमास तन्वी ।
मन्ये मनोजोऽद्य विजित्य विश्वं
कौटिल्यमुक्तं स्वधनुश्चकार ॥ १५

एणीदृशः पाणिपुटे निरुद्धा
वेणी क्वणत्किङ्किणिका विरेजे ।
सरोजकोशादिव निःसरन्ती
श्रेणी घनीभूय मधुव्रतानाम् ॥ १६ ॥

आनीय रम्ये मणिपादुके सा
निवेदयामास विनीतमूर्त्तिः ।
आलोक्य वक्त्राब्जमनिन्दिताया-
स्तदोदतिष्ठन्मुदितो मुकुन्दः ॥ १७ ॥

अथोपविश्येन्दुशिलातलेऽसौ
ताम्बूलरागारुणिताधरश्रीः ।
विलोकयन् दर्पणमम्बुजाक्षः
प्रक्षालयामास मुखेन्दुबिम्बम् ॥ १८ ॥

ततोऽन्वितोऽसावनुजीविवृन्दैः
प्रभातवातं परिषेव्य भव्यम् ।
शनैः श्रमागारमसीमधामा
कामाधिकश्रीर्मधुजिज्जगाम ॥ १९ ॥

निर्माय मल्लोचितमाशु वेश-
मापूर्य कर्पूररजोभिरङ्गम् ।
मुकुन्दलास्फालविशालबाहु-
र्वीरो रसो मूर्त्त इवाविरासीत् ॥ २० ॥

सानन्दमिन्दीवरसुन्दरश्री-
र्नियुध्य शार्ङ्ग यदुवीरवर्गैः ।
निबद्धगोधः कलिताङ्गुलित्र-
श्चिक्षेप शार्ङ्गेण शरान् मुरारिः ॥ २१ ॥

आचार्यभाव स्वयमेव तन्व-
न्नभ्यासयामास शिशूनथासौ ।
नियोजिता शिष्यगणे हि नूनं
विद्यानवद्या प्रथिमानमेति ॥ २२ ॥

नवं तनीयः परिधाय वासः
सुरम्यपाटीरवरासनस्थः ।
स वासिताङ्गोऽथ सुवासतैलै-
र्नैर्मल्यमुद्वर्त्तनतः प्रपेदे ॥ २३ ॥

अम्भोभिरम्भोनिधिसङ्गतायाः
समाहृतैः प्राक् सुरनिम्नगायाः ।
मसौ सुशीतैर्नवशातकुम्भ
कुम्भच्युतैरादरतोऽच्युतोऽयम् ॥ २:

प्रतिप्रतीकादपसार्य्य वारि
पीताम्बरे भास्वतरे दधानः ।
स संयतात्मा विधिना विधिज्ञः
समर्चयामास शिवो शिवाय ॥ २५ ॥

अथ प्रसन्नाननपुण्डरीको
दानान्यनेकानि वनीयकेभ्यः ।
स्रग्गन्धवासोभिरलङ्कृतेभ्यो
ददौ विदूराणि हृदोऽपि तेषाम् ॥ २६ ॥

समाहृतैरम्बुभिरम्बुराशि-
स्तथाप्यनूनः समभूत् तदानीम् ।
यथा हरेर्दानपयःप्रवाहै-
र्वृद्धिङ्गमालोक्य पयोधिमन्यम् ॥ २७ ॥

विहसोद्यात् येन तदा प्रदातुं
विचारितः स्वर्णमहीधरोऽपि ।
परं तदावासविलासभाजां
निवर्त्तितोऽभूत् कृपया सुराणाम् ॥ २८ ॥

एवं विधायाह्निककृत्यजातं
सभाजयामास मुदा कवीन्द्रान् ।
दत्त्वा च तेभ्यो विविधेप्सितानि
लब्धाशिषः सौख्यमुवाह कृष्णः ॥ २९ ॥

अथ श्रियाधःकृतराजराजो
राजोचितं वेश्ममसौ विधाय ।
विलोक्य वक्त्रं मुकुरे स्मितास्यः
शनैः सभामन्दिरमाससाद ॥ २० ॥

तदा सुवर्णासनसन्निषण्णः
प्रफुल्लनीलाब्जरुचिश्चकासे ।
सुमेरुशीर्षे सहसा प्ररूढो
महेन्द्रनीलाद्रिरिवापरोऽयम् ॥ २१ ॥

महोदयानां परमं निधान-
मभीष्टविश्राणकमाश्रितानाम् ।
अथोपतस्थुर्वरमन्त्रिणस्तं
समुद्गतं भानुमिवात्मभासः ॥ २२ ॥

आमुक्तविद्युन्निभपीतवस्त्रं
तापिञ्छपुञ्जद्युतिमात्तचापम् ।
निदाघतप्ता इव वारिवाहं
प्रपेसुरेनं प्रणयाज्जनौघाः ॥ २३ ॥

विचारधारार्पितशुद्धबुद्धि-
र्विनोदयामास बुधान् स तत्र ।
काव्येषु भव्येषु च सत्कवीनां
कृतावधानो मुदमाततान ॥ २४ ॥

मघवत्सहन्द्रैरिव राजवर्गै-
रभ्यीयमानेन मनोज्ञभासा ।
तुषारधाम्नेव शरन्नभःश्री-
र्विभूषिता तेन सभा तदानीम् ॥ २५ ॥

भ्रूसंज्ञयैवासनसन्निविष्टा-
नाहूय मन्त्राधिकृतानथासौ ।
धीरस्वरः स्मेरमुखारविन्दो
मन्त्रेण जीवप्रतिमो जगाद ॥ २६ ॥

यदङ्गीकृतं कारणतः कुतोऽपि
देवद्रुमस्याहरणं मयाद्य ।
सम्पद्यते तत् कथमित्युदीर्ण-
चिन्ताप्रवाहो वहति मदन्तः ॥ २७ ॥

सूक्ष्मैरुपायैस्तदवश्यमेव
विधेयमायासपरायणेन ।
अपूरिताङ्गीकरणस्य पुंसो
भवन्ति भूयांसि हि दुर्यशांसि ॥ २८ ॥

तद्ब्रूत यूयं बहुदर्शिनोऽत्र
परं प्रवीणा नयनीतिशास्त्रे ।
यदङ्गीकृतं मे परिपूरितं स्याद्-
यथा विरोधो न भवेच्च देवैः ॥ २९ ॥

तदा निगद्येति गदाग्रजोऽसौ
बभार मौनं परितो विलोक्य ।
तन्वन्ति वक्यर्थमनर्थहीनं
प्रायो हितं भाषितमेव सन्तः ॥ ४० ॥

वचांसि कंसद्विषतस्तदानीं
निपीय पीयूषसहोदराणि ।
मुदा हृदाधाय जये विजेता
गदो जगादोग्रमतिर्मुकुन्दम् ॥ ४१ ॥

विशुद्धबुद्धे ! निखिलेऽपि लोके
न वेदनीयं परिदृश्यते ते ।
तथापि यत् पृच्छसि मादृशांस्ते
माहीनतायाः परिजृम्भितं तत् ॥ ४२ ॥

केयं नवीना तव नाथ ! लीला
यन्मन्यसे देवतरुं दुरापम् ।
सुरान्तक ! त्वद्भ्रुवि भङ्गुराया-
मुद्भिद्यते कस्य न भीतिरन्तः ॥ ४३ ॥

निवृत्तिबीजं विपदामुदार-
सम्पद्वराणामपि पूर्त्तिमूलम् ।
निदानमुद्दामयशस्ततीनां
विपश्चितो विक्रममामनन्ति ॥ ४४ ॥

विराजमानो ज्वलदंशुजालै-
र्यत् तापयत्येव जगन्ति नित्यम्।
उच्चैरतो निर्भरसम्भृतश्री-
र्धत्ते समन्तादुदयं दिनेशः॥ ४५॥

हेतोः कुतो वा ज्वलनं ज्वलन्तं
बिभर्त्ति नेत्रेण सदा त्रिनेत्रः।
प्रायः प्रकृत्यैव महानुभावा-
स्त्यजन्ति न क्वापि परं प्रतापम्॥ ४६॥

विहाय दण्डं प्रथनेन साक्षां
नोपैति शत्रुर्वशतां कदापि।
उत्सृज्य वह्निं ननु नीरसेकैः
किमश्मसारो मृदुतामुपेयात्॥ ४७॥

प्रभावकेऽपि द्विषतां प्रचण्डे
दण्डे समुद्राविषि कार्यसिद्धौ।
वधाशुपायान्तरकल्पनाया-
मासक्तचित्ताः सहसा लभन्ते॥ ४८॥

पराङ्मुखानां चरमे ह्युपाये
राज्ञामुदग्रोऽपि भुजप्रतापः।
धत्तेऽवहासं बत निर्विषाणा-
मुपः फटाटोप इवोरगाणाम्॥ ४९॥

नचोदयं नापि परं प्रतापं
प्रपश्यते देव। कदापि भूपः।
पादप्रचारैः प्रसभं धराभ-
च्छीर्षाण्यनाक्रम्य यथोष्णरश्मिः ॥ ५० ॥

कलाभृतां ताम्रगुतामतीत्य
कौटिल्यमेवाभ्युदयस्य हेतुः।
विस्मृत्य रात्रेशमयोह सर्व्वे
द्रष्टुं यतन्ते सितपक्षतोन्दुम् ॥ ५१ ॥

तस्मादनुत्साहविषादमोहान्
विनाश्य विज्ञानमहाबलेन।
उपायमातिष्ठ चतुर्थमद्य
तेनाञ्जसा सिध्यतु सर्व्वमेव ॥ ५२ ॥

मत्वा मुहुर्बाहुजधर्ममुग्रं
दोर्विक्रमेणाक्रमतां जगन्ति।
उत्सर्पिहिनामुल्लसितासिधारः
करः सहायः समराङ्गणेषु ॥ ५३ ॥

बलानुज। त्वद्दलवद्दलस्य
बलस्य नूनं समरः परीक्षा।
यदभ्युपेतां क्लैव्यभीतिमूलं
मनीषिणः साम्यमुदाहरन्ति ॥ ५४ ॥

मुहुर्मुहुर्दैत्यनिराकृतश्रीः
किं गच्छते वीरवरेष्वपीन्द्रः ।
महेन्द्र इत्यादरभागिदानीं
विनिर्मितो नाथ ! त्वया त्वयैव ॥ ५५ ॥

पुरा तुराषाड् गिरिधारिणस्ते
बालस्य तद्बाहुबलं निभाल्य ।
ईर्ष्यावशात् त्वय्यनुजेऽपि कोदृ-
गपूर्ववात्सल्यमघो तदाक्षीत् ॥ ५६ ॥

तद्देव ! समश्चातु वाहिनी ते
प्रास्थानिकं मङ्गलमाविरस्तु ।
भवद्द्विपव्रातभरैरिदानीं
प्रयातु रागं सुरनिम्नगापि ॥ ५७ ॥

अश्रीहतैतद्वचनोऽथ वाग्मी
महामनाः कीर्त्तिधनाभिलाषी ।
प्रमाणयन् सामगुणाननेकान्
नत्वा श्रीनिवासमुवाच योग्याम् ॥ ५८ ॥

वीरोचितं चारुतरं गरीयो
यज्जल्पितं देव ! तवानुजेन ।
एतादृशं जल्पितुमेतदन्यो
न जातु शक्नोति मुकुन्द ! कोऽपि ॥ ५९ ॥

नयाश्रितेऽर्थे गदिते गदेन
नार्थः परं कोऽपि परस्य वाग्भिः
घेनैऽभिषिक्ते जलदेन भूयः
किं नाथ ! कुल्यारचनाप्रयत्नैः ॥ ६० ॥

विधेयसंसिद्धिविधायकानां
विहाय साम्नान्तु परं प्रयोगम् ।
सन्दिग्धसिद्धावधिकप्रयासे
न विग्रहे मज्जति बुद्धदीयम् ॥ ६१ ॥

विश्राय विघ्नः समयं समन्तात्
तनोति यो मार्दवमुपतापं ।
स रश्मिमालीव महोदयानां
दिने दिने भाजनतामुपैति ॥ ६२ ॥

विशीर्णधाम्नामनभीष्टहारी
तेजस्विनां चारयशःप्रचारी ।
तपःपराणामपि मुक्तिकारी
सामप्रयोगो नहि कस्य योग्यः ॥ ६३

साम्नादिसाध्येषु समीहितेषु
योज्यो न दण्डः खलु पण्डितेन ।
हिमापनेये विषमे विकारे
प्रस्वेदनं किं तनुते प्रभानि ॥ ६४ ॥

सामानुविद्धां सहजप्रसिद्धां
नीतिं वितन्वन्नतिशुद्धकीर्त्तिः।
समाहृतश्रीरपि धार्त्तराष्ट्रै-
र्युधिष्ठिरो राजपदे स्थिरोऽभूत् ॥ ६५ ॥

जयो न दण्डे नियतः कदापि
सिद्धिर्विधेये हि विधेरधीना।
तन्नीतिशाली सहसा विधत्ते
न दण्डमाखण्डलविक्रमोऽपि ॥ ६६ ॥

शक्तित्रयेणाप्रतिमेन पूर्ण-
स्तथानुरक्तप्रकृतिः प्रकृत्या।
पुरश्च पश्चाच्च यदा समर्थ-
स्तदाभियायाद्विजयाय राजा ॥ ६७ ॥

ये रङ्गभूमिं प्रसभं विशन्ति
मूढा रिपूणामविचार्य्य शक्तिम्।
ते यान्ति तेषामचिरात् कृपाण-
धारापरिष्वङ्गसुखानि नूनम् ॥ ६८ ॥

क्षीणोऽपि शत्रुः स्वपदे स्थितस्से-
ज्जेतुं न शक्यः प्रभुशक्तिभाजा।
ग्राहः कृशीयानपि नीरमध्ये
गजेन्द्रमाकर्षति हेलयैव ॥ ६९ ॥

स्निग्धोऽपि नीतौ परिनिष्ठितोऽरिः
सदा विशङ्क्यः सुधिया नृपेण ।
न जातु गृह्णात्यतिमन्तमङ्ग !
स्वर्भानुराक्रामति शीतरश्मिम् ॥ ७० ॥

नापेक्ष्य मन्त्रं सहसा मदान्धो
मध्यं महतां द्विषतां व्रजेद् यः ।
पिपीलिकासङ्घसमाकुलस्य
दशामसौ गच्छति पन्नगस्य ॥ ७१ ॥

तद्देव ! देवद्रुमयाचनार्थं
कश्चित् प्रहेयः सविधे मघोनः ।
तेजस्विनां हीनबलेऽपि शत्रौ
नयत्यसुद्दीपयति प्रतिष्ठाम् ॥ ७२ ॥

भवन्तमप्यर्थमयाचितेन
तनोति नीत्या खलु नीतिवेत्ता ।
साक्षात् क्षतोऽपि द्विरदोऽष्टपाद्-
श्रियैर्निनादादनुमीयते हि ॥ ७३ ॥

स याच्यमानोऽपि नचेन्महेन्द्रो
ददाति देवद्रुममिद्धदर्पः ।
विभो ! न दोषाय तदा विरोधो
यतोऽवमानं सहते न तेजः ॥ ७४ ॥

लब्धोदयोऽप्यङ्ग । विलङ्घ्य कालं
नालम्बते जातु महो महस्वी ।
प्रगेऽपि किं दृष्टमथ श्रुतं वा
यद्गण्डतां गच्छति चण्डरश्मिः ॥ ७५ ॥

तनोति योग्ये समये महात्मा
नितान्तमुग्रत्वमनुग्रतां वा ।
विभो ! विहायो दिवसेऽर्कतेजो
दधाति रात्रौ खलु चन्द्रिकाश्च ॥ ७६ ॥

वितन्वतस्ते विजयानुकूलां
नीतिं श्रियो यान्तु वशं समन्तात् ।
विहाय नावं नरदेव ! किं स्या-
दम्भोनिधौ सन्तरणं धियाय ॥ ७७ ॥

सामाद्युपायवितयेषु सत्सु
सम्यक् प्रयुक्तेष्वपि निष्फलेषु ।
दण्ड्येषु दण्डं विनयेन्नयज्ञो
भूयोऽप्यदो नीतिविदो वदन्ति ॥ ७८ ॥

उदीरितं सात्यकिना तदेवं
हृदैव देवः प्रणयन सम्यक् ।
विचारधारासु महोदयाना-
मुद्धासमानं मन एव मन्त्री ॥ ७९ ॥

इति वचनमुदारं सात्यकेः सत्यवाचो
विविधगुणगभीरं गौरवादाकलय्य ।
स्वयमपि हृदि भूयो भावयित्वानुवेलं
सुररिपुरथ दूतप्रेषणायोत्सुकोऽभूत् ॥ ८०

स्निग्धाभिः परिहासवाग्भिरमलैरालोकितैः सस्मितैः
दारिद्र्योदयदारिभिर्बहुविधैर्दानैः समानैरपि ।
सन्तोषं गमयन् मनः खलु नृणामापामरं
स्मेराक्षो विससर्ज संसदमसौ प्रासोत्सवः केशवः ॥ ८१ ॥

इति वासुदेवविजये महाकाव्ये नीतिविवेको
नाम पञ्चमः सर्गः ।



# षष्ठः सर्गः ।



नारदं नयदयाविशारदं
शारदं विधुमिवातिसुन्दरम् ।
आजुहाव मनसा नवादराद्-
बादरायणमिवाथ माधवः ॥ १ ॥

सोऽधिगत्य हृदयं जगद्गुरो-
राजगाम सहसा महामुनिः ।
ज्ञातनाथमनसो विलम्बितुं
नालमुज्ज्वलधियः कदाचन ॥ २ ॥

द्रष्टुमुत्सुकमना मधुद्विषं
राजहंस इव मानसं सरः ।
सञ्चरन् नभसि निर्मलद्युति-
र्लोकलोचनपुटीरनन्दयत् ॥ ३ ॥

रोहिणीशकिरणाभिरामया
भासमानतनुभातिधारया ।
स्वर्नदीमभिनवामिवोच्चकै-
राततान गगनाङ्गने मुनिः ॥ ४ ॥

अभिवेद्य कनकासने तदा
स्वागतञ्च परिपृच्छ्य सादरम् ।
भूमिलग्नशिरसा प्रणम्य तौ
पर्य्यहृतुषदसो सपर्य्यया ॥ १० ॥

अर्चितो भगवता सपर्व्वतः
सर्व्वतः स खलु सम्मुदं ययौ ।
स्वामिना हि सदयेन सत्कृताः
प्राप्नुवन्ति सुधियः कृतार्थताम् ॥ ११ ॥

सादरेण हरिणा विनिर्म्मितां
प्राप्य सत्कृतिमतीव हर्षितः ।
नारदः सविनयो नयोज्ज्वलां
निर्म्मलां सपदि वाचमाददे ॥ १२ ॥

अद्य मे मनसि सम्मदो महा-
नद्य मे नयनयोः कृतार्थता ।
साम्प्रतं असुरभूम्नमोज्ज्वलं
यद्यलोकि तव पादपङ्कजम् ॥ १३ ॥

किं न सन्ति भुवने महर्षयः
किं न ते भवति भक्तिभाविताः ।
यत् तथापि मयि ते प्रसन्नता
तत् कृपामय ! कृपाविजृम्भितम् ॥ १४ ॥

पद्मनाभ! हृदयस्य सम्मदो
यादृगुल्लसति सन्निधौ तव।
स्यन्दमानकिरणे हिमद्युतौ
तादृशः किमु कदापि जायते ॥ १५ ॥

संस्मृतिर्भगवता कृताद्य या
सा मदीयसुकृतैर्व्यधायि किम्।
चापलात् सहजतस्तथापि मे
तत्र कारणमुदीयते मनः ॥ १६ ॥

जातिमात्रविहितादरादृशो
मादृशाद् यदुपते! द्विजन्मनः।
जायते यदि विधेयमक्षरा
तत् तवैव महिमा महाद्भुतः ॥ १७ ॥

युक्तमेव तदिदं निवेदनं
तावकीनपुरतो जगत्पते!।
यत्त्वदीयचरणपद्मसेविनां
नह्युदञ्चति जगत्स्वसाध्यता ॥ १८ ॥

तन्निदेशय निदेशकारिणं
किं मुकुन्द! करवाणि तेऽधुना।
ज्ञातनाथहृदयोऽपि सेवक
कृत्यवस्तुनि निदेशमिच्छति ॥ १९ ॥

किं प्रविश्य तरसा रसातलं
शेषशेखरमणिं नयामि ते ।
ध्यायतस्तव पदाम्बुजद्वयं
क्वापि नैव मम कुण्ठितं मनः ॥ . .

किं व्रजामि सविधं महेशितुः
किं विरिञ्चिपुरमुत्पतामि वा ।
केशव ! ज्वलनसारथेरिव
क्वापि मे न खलु बाधते गतिः ॥ २९ ॥

एवमुल्लपति नारदे तदा
पर्व्वतोऽपि विकसन्मुखाम्बुजः ।
मौलिचालनमुदीरयन् परं
गौरवं विनिदधे तदुक्तिषु ॥ ११ ॥

नन्दनानि मकरन्दधारतो
निर्मलानि मनसः सतामपि ।
आकलय्य गदितानि सादरं
नारदस्य मुमुदेतरां हरिः ॥ २३ ॥

उल्लसन्नयनपद्मशोभिनो-
ल्लासितेन ललितस्मितश्रिया ।
आननेन लघयन् सरोरुहं
माधवो मधुरया गिराऽब्रवीत् ॥ २४ ॥

दुर्निमित्तविनिवृत्तिकारकं
तावकं पदममश्नती मम ।
भानुमन्तमिव वारिजन्मनः
क्वापि न व्रजति सम्मुदं मनः ॥ २५ ॥

सप्रसादहृदये त्वयि प्रभो !
वाञ्छितं जगति किन्न लभ्यते ।
उद्गते शशिनि सम्भृतद्युतौ
दुर्लभाः किमुत शीतला रुचः ॥ २६ ॥

हंसयानसुत ! माहशामिदं
श्रूयतामुपचितं निवेदितम् ।
त्वय्यशेषविषयोपदेशके
नाथ ! किन्न कथनीयमस्ति नः ॥ २७ ॥

देवलोकमभिगम्य मत्कृते
पारिजातकुसुमं समाहृतम् ।
अर्पितञ्च तदहो त्वयाथ मे
रुक्मिणीसविधवर्तिने पुरा ॥ २८ ॥

सौख्यभारमिव तज्जनान्तिके
मामयाचत विदर्भनन्दिनी ।
दर्पिणप्रणयभङ्गभीरुणा
तन्मयापि सुदृशे समर्पितम् ॥ २९ ॥

तत् कुतोऽपि बत दुर्जनाननात्
संश्रुतं सपदि सत्यभामया।
मोदते हि हृदयं सदा सुहृ-
द्भेदवस्तुनि मलीमसात्मनाम् ॥ २० ॥

आकलय्य कुसुमार्पणं तदा
हन्त भीष्मतनयोन्नतिप्रदम्।
प्राणहानिपरिनिष्ठमानसा
मानसागरजले ममज्ज सा ॥ २१ ॥

तत्सखीपरिकरैरुदीरितं
दुर्विधेयमधिगम्य सुभ्रुवः।
उद्धताधिगतविद्धचेतसा
यातमाशु च मया तदन्तिके ॥ २२ ॥

बिभ्रतीह्य रुचिरोषमङ्कं
षोडशीमिव कलां कलानिधेः।
पश्यतः प्रणयिनीं प्रमोश्वकैः
शङ्कयाकुलितमास मानसम् ॥ २३ ॥

'सत्वरं विरम चाहसादितः
किं क्रियेत भवदीप्सितं प्रिये'।
भाषमाणमिति मां ययाच सा
पारिजातकुसुमं सखीमुखैः ॥ २४ ॥

स्वीकृतं खलु मयापि तन्मुदे
पारिजाततरुदानमञ्जसा।
निर्भरप्रणयवञ्चितात्मनः
किं विवेकमवगाहते मनः॥ २५॥

तन्मुने! द्रुमिममाशु याचितुं
देवराजनगरी गरीयसी।
वत्सलेन भवताद्य गम्यतां
गम्यता च तव कुत्र नेष्यते॥ २६॥

आशिषः स्वयमुदीर्य सादरं
माद्दशामथ नतिर्निवेद्यताम्।
निर्जरेशमनुयुज्य मङ्गलं
मामकीनमपि तत् प्रयुज्यताम्॥ २७॥

सर्वमेतदुचितादनुक्रमात्
स्वीकृतं खलु निवेद्य मामकम्।
उच्यतां मम गिरा चिरादिदं
मोहसद्विनयमेव वासवः॥ २८॥

कारणादुपचितान्महामते!
याचते सुरतरुं तवानुजः।
तत् त्वदीयकरुणा विजृम्भतां
दीयतां विबुधनाथ! सोऽधुना॥ २९॥

सर्व्वदा खलु निदेशकारिणे
प्राकृताय सुहृदेऽनुजन्मने ।
भूरुहोऽपि यदि नैव दीयते
तत् कमस्तु विचारचातुरी ॥ ४० ॥

यः स्मृतोऽपि मघवन् ! समीहितं
पूरयत्यविरतं भवादृशाम् ।
केशवाय सततं नतात्मने
पादपस्य वितरोऽपि किं महान् ॥ ४१ ॥

इत्यमर्थितवदुदारचेतसा
याचितोऽपि भवता सुरद्रुमम् ।
यदसौ नहि ददाति दुर्मद-
स्तन्निगद्यमिदमूर्जिताक्षरम् ॥ ४२ ॥

वारितापि विनयैः क्रुधा हरे-
राविरास सहसा हरिं प्रति ।
संहृतोऽपि वसनैः प्रयत्नतः
किं हुतं भवति नोच्छिखः शिखी ॥ ४३ ॥

त्वां मुरारिरपि गौरवादहो
याचतेऽर्जुनसखः शचीपते ! ।
चेदितोऽपि न तनोषि मार्द्दवं
तदयं सपदि वीतदूषणः ॥ ४४ ॥

श्रीपते ! तव निदेशलाभतः
प्लावितं हृदयमद्य मे मुदा ।
यत् तथापि विनिवेदयाम्यहं
सर्व्वथा तदवधेयमञ्जसा ॥ ५० ॥

याचितो न कतिशो भवत्कृते
वासवो विटपिनं दिवो मया ।
नाददात् तदपि दर्पमाश्रित-
स्तत्प्रसूनमपि हन्त कर्हिचित् ॥ ५१ ॥

सर्व्वलोकहृदयाधिवासिनो
वासुदेव ! विदितं तवाखिलम् ।
मन्यसे तदपि याचितं हितं
ज्ञायते न हृदयं कदापि ते ॥ ५२ ॥

निर्भरैर्भुजभुजङ्गविक्रमै-
राक्रमाय जगतामपि प्रभुः ।
लाट्योऽपि यदि याचते परं
क प्रयातु तदयाचितव्रतम् ॥ ५३ ॥

प्रार्थितोऽपि मघवान् मया पुनः
कर्हिचिन्निजतरुं न दास्यति ।
गम्यते तदपि देव ! न प्रभो-
र्योपितं समुचितं हि लङ्घितुम् ॥ ५४ ॥

स्पन्दमानमवगम्य दक्षिणं
लोचनं निजमकारणादपि ।
अन्वमायि परमेष्ठिसूनुना
सन्निकृष्टतरमिष्टमात्मनः ॥ ६० ॥

अर्चितो नगरवासिभिस्तदा
सादरं नयनपङ्कजस्रजा ।
कौतुकोत्तरलितः शनैरसौ
निर्ययौ नगरतो नभोऽध्वना ॥ ६१ ॥

देवशैलवनवीक्षणोत्सुकं
पर्वतस्य हृदयं विचारयन् ।
धारयंश्च चरणौ भुवि क्षणं
खे सुखाच्चिरमसावचीचरत् ॥ ६२

मोहवत्फलभरानताचल-
च्चारुमारुतविलोलपल्लवाः ।
सम्भ्रमादिव महीरुहास्तदा
तौ प्रसूननिकरैरवाकिरन् ॥ ६३ ॥

पल्वलेषु परिपीय पङ्कज-
स्यन्दमानमकरन्दधोरणीः ।
मन्दमन्दगतिना नभस्वता
सेवितौ मुदमवापतुश्च तौ ॥ ६४ ।

धारसारवविरावितायल-
चक्रवाकचयचारुताङ्कताः ।
उल्लसन्नलिनरेणुरञ्जिता-
स्तौ निरीक्ष्य सरसीर्ननन्दतुः ॥ ६५ ॥

नन्दनन्दनगुणान् मनोरमान्
पर्वताय सुहृदे निवेदयन् ।
काननाचलसरस्तरङ्गिणी-
रुत्ततार निमिषेण नारदः ॥ ६६ ॥

क्वाप्यभ्रंलिहशैलशेखरमहोमध्यास्य विश्रान्तये
क्वाप्यारुह्य रथानिवातिसुखदानम्भोधरानुच्चकैः ।
भ्राजिष्णुः क्वचनांशुमानिव निरालम्बो वियन्मण्डले
द्वैयाधीशपुरं प्रति प्रमुदितो धातुस्तनूजोऽभ्ययात् ॥६७॥

विविधनगरदेशग्रामकान्तारभूमी-
र्द्रुतमथ समतीत्य स्वीयसिद्धिप्रभावात् ।
कमलभवतनूजः पर्वतेनानुबद्धः
सपदि तुहिनशैलाभ्यासमभ्याससाद ॥ ६८ ॥

इति वासुदेवविजये महाकाव्ये दूतसंप्रेषणो
नाम षष्ठः सर्गः ।

---

## सप्तमः सर्गः।



अथ शृङ्गशतेन शोभमानं
परिणाहैः परितः परिस्फुरन्तम् ।
हृदि वीक्ष्यतरं महात्मनस्तं
हिमशैलं तनयो विधेर्ददर्श ॥ १ ॥

तुहिनेन सदा सितच्छवीनां
शिखरीणां क्रमशः स्तरच्छलेन ।
घनफेनयुता तरङ्गमाला
स्फुरतीवेह मुहुर्नभोऽम्बुराशेः ॥ २ ॥

अरुणारुणरागरञ्जिताङ्गो
धवलः शृङ्गवरो रुचिच्छटाभिः ।
उमया मिलिताङ्गदेहमीशं
वपयन्नेव यथा क्वचिद्विभाति ॥ ३ ॥

क्वचिदिन्दुसुधाकरानुकारा
रुचिधारा शिखरात् समुल्लसन्ती ।
समभानि मुनीश्वरेण सद्यः
सुरगङ्गेव नभोऽङ्गनात् पतन्ती ॥ ४

क्वचिदच्छतरैर्हिमाम्बुपूरै-
रचिरोद्यानरवेर्द्युतिप्रतानात् ।
नवविद्रुमरागमभ्युपेतै-
र्द्रुतहेमप्रतिमा पराबभूवे ॥ ५ ॥

क्वचिदूर्द्ध्वशिलोच्चयकटेषु
प्रतिहतार्ककरान्धकारितेषु ।
प्रतिभाति पयोदकुञ्जराणां
विपुलालाननिभं शिरःसहस्रम् ॥ ६ ॥

हिमभाजि मनोज्ञरत्नभूमौ
सह लीलां दयितेन लम्भतीनाम् ।
पिहितानि भवन्ति किन्नरीणां
मधुराङ्गाणि सदैव धूमिकाभिः ॥ ७ ॥

क्वचनोपलपातचूर्णितानां
पयसां मूर्च्छितपद्मरागभासाम् ।
स्फुटदाडिमबीजसोदरेभ्यः
पृषतेभ्यः स्पृहयन्ति कीरसार्थाः ॥ ८ ॥

क्वचिदुन्नतया शिलोच्चयानां
नितरां निम्नतया क्वचिच्च पार्श्वे ।
परिदर्शयतीव पुण्यपाप-
प्रतिमूर्त्ती पथिकाननायतोऽध्वा ॥ ९ ॥

अततीततिभिः क्वचिच्च गाढं
सहवासप्रणयाद्विवोपगूढः ।
अतटात् पतनोन्मुखो महाश्मा
जनयत्येव भयं मुहुर्जनानाम् ॥ १० ॥

क्वचनाश्मवशान्नतोन्नताभिः
कुटिलाभिः सरणीभिरद्रिरेहे ।
समनुक्रियते स्खलत्पदाभि-
र्भुजगाधीशतनोर्विलासपालिः ॥ ११ ॥

क्वचिदाकलितानि कण्टकानां
गहनैर्भूरितरैर्गुहान्तराणि ।
अतिसान्द्रतमांसि दुर्जनानां
हृदयानीव सदा दिशन्ति भीतिम् ॥ १२ ॥

क्वचिदश्मनि निर्झराम्बुपाता-
द्विलसज्झर्झरनादमाकलय्य ।
ध्वनितानि मृदूनि कीचकानां
दधते झर्झरवेणुनादलीलाम् ॥ १३ ॥

क्वचिदम्बुमुचा नितम्बदेशे
परिपक्वेन किरातसुन्दरीणाम् ।
उदबिन्दुमिषेण केशपाशः
पृथुमुक्ताप्रकरैः प्रसाध्यते नु ॥ १४ ॥

क्वचनाभ्रचयैः श्रितेषु गूढं
शिखरेषु स्फुरतीह पादपानाम्।
जनयन्ननिशं सुवर्णवर्णो-
भ्रममालोकयतां तडित्प्रपञ्चः ॥ १५ ॥

परितो वनराजिराजितानां
रुचिमालोक्य मनोज्ञदल्लकानाम्।
अवहेलमधान्मुनिस्तदानीं-
मतिमान् नवमेघडम्बरेषु ॥ १६ ॥

क्वचिदुल्लसदिन्द्रनीलकान्त्या
स्फुरितानां मणिकान्तधोरणीनाम्।
स निरीक्ष्य रुचिं सुरस्रवन्ती-
यमुनासङ्गममोहमाजगाम ॥ १७ ॥

विलसद्घनमालयातिरम्यं
कलितश्रि द्विजराजिसेव्यमानम्।
दनुजारिशरीरवद्विनोदं
व्यतनोत् सानुमतं तदा तदद्रेः ॥ १८ ॥

प्रकृतिप्रभवस्य शैलधेनोः
स्तनगान्तःस्रवतां कमस्वनेन।
पयसां वलयस्तनुप्रधारा
मिलिता याति शनैः सरिद्विलासम् ॥ १९ ॥

क्वचन प्रणदज्जलप्रपातं
घनघूत्कारविधायिघूकजुष्टम् ।
स्फुरतीव गृहं गभीरतायाः
स्फुटभिल्लीविरवं निकुञ्जवृन्दम् ॥ २० ॥

इह निर्झरवारि पातुकामं
मृगयूथं परिलक्ष्य लाङ्गुलाग्रम् ।
विधुवन् क्रमते शनैस्तरक्षुः
क्वचिदेलागहनैस्तिरोहिताङ्गः ॥ २१ ॥

अजगर् निजकान्तिभिस्तमर्घ्यं
क्षणभन्धीकृतवीचयो सुदेव ।
विशतीह मृगः स्वयं महाहे-
र्मुखरन्ध्रं विपुलं बिलं यथाद्रेः ॥ २२ ॥

अतिनूतनमालतीलतानां
कुसुमान्युच्छ्रितसानुसङ्गतानि ।
कमलासनसम्भवोऽवलोक्य
स्फुटतारानिकरभ्रमं बभार ॥ २३ ॥

विलसद्विमलेन्द्रनीलकान्तीन्
जलदानत्यनुरागमाकलय्य ।
मदमेदुरमानसाः प्रकामं
शिखिनस्तं परितोषयाम्बभूवुः ॥ २४ ॥

क्वचिदुच्चरवैर्विराव्यमाणाः
सरसैः सारसहंसचक्रवाकैः ।
सरसीः सरसीरुहाभिरामा
गिरिरालोक्य तदा भृशं ननन्द ॥ २५ ॥

मृदुपल्लवशालपादपाली
विलसन्ती नितरामधित्यकायाम् ।
हरिदम्बुनिधेस्तरङ्गभङ्गिं
क्वचिदङ्गीकुरुतेऽनिलानुषङ्गात् ॥ २६ ॥

क्वचिदाकुलितान् मृगेन्द्रनादै-
र्भयविभ्रान्तविलोचनान् मुनीन्द्रः ।
द्विरदानवलोक्य धावमानान्
करुणाकोमलचित्तवृत्तिरासीत् ॥ २७ ॥

सविकाशपलाशपुष्पगुच्छो
रुचिरस्तेन तदा मुदा व्यलोकि ।
दहनाय मुहुर्वियोगभाजा-
मुदितः कामशिखीव काननेषु ॥ २८ ॥

नवकेशरकानने ऽलिकीर्णां
कुसुमालीमवलोकयाञ्चकार ।
विषदिग्धमुखीमुदीर्णसारां
शरधारामिव मन्मथस्य राज्ञः ॥ २९ ॥

मरुतापहृतो नभोऽन्तराले
ददृशे तेन कदम्बरेणुराशिः।
घनमानविमर्दनाय यूनो-
र्मदनस्येव चमूसमुत्थधूलिः॥ ३०॥

अवगाह्य सरः सरोजरम्यं
सरलानां रसमुत्कलैर्निपीय।
मृदुना पवनेन सेव्यमानो
नितरां प्रीतिमसौ सबन्धुरापत्॥ ३१॥

दधतोऽपि महोन्नतिं समन्तात्
पवनान्दोलनलोलचारुशाखाः।
कुसुमैस्तमवाकिरन्नशोका
चलते कुत्र महात्मनां न मानः॥ ३२॥

विहगारवरम्यवाग्विलासो
विलसत्पल्लवकल्पिताञ्जलिश्रीः।
विनयानतवृक्षमौलिरेनं
प्रणनाम प्रणयादिवाद्रिराजः॥ ३३॥

क्वचिदुज्ज्वलितं कृतैर्लताग्रै-
रुचिरं पारुतरोटजावलीभिः।
मुमुदेऽतितरामसौ प्रशान्तम्
यमिनामाश्रममण्डलं विलोक्य॥ ३४॥

प्रतिनूतनभूरुहान् प्रयत्नात्
स्नपयन्तीः कलसाम्भसां प्रसेकैः।
नववल्कलवाससः समन्ता-
न्मुनिकन्याः प्रणयादयं ददर्श ॥ ३५ ॥

स्मरणान्यभिनीय सोऽद्रिमूचे
ननु गौरीशिखरः स एष पश्य।
गिरिजेह गिरीशमाप्तकामा
दयितत्वेन पुरा तपश्चचार ॥ ३६ ॥

कलसस्तननिःस्रवैस्तयासौ
गमिता हृद्धिमपत्यनिर्विशेषात्।
अधुनापि सुमाप्तमरन्दमस्तं
तरवस्तद्विरहादिव त्यजन्ति ॥ ३७ ॥

मधुरेण फलेन तर्पयन्ती-
मिह राज्ञीमिव गौतमीं प्रयत्नात्।
श्रितभूर्जतरुं ध्रुवं चमर्य-
श्चलवालव्यजनैः सभाजयन्ति ॥ ३८ ॥

तृणमेरुतरुं समाश्रयन्ती
ललिता सोमलता प्रियं प्रियेव।
परिशिक्षयतीव वीक्षमाणान्
नितरां प्रेम सतां पवित्रमेतत् ॥ ३९ ॥

प्रियकाजिनरम्यगण्डशैल-
स्थलमध्यास्य मनोज्ञकण्ठभाजः।
वटवः पटवः स्वरादिभक्त्या-
विह गायन्ति रथन्तराख्यसाम ॥ ४० ॥

प्रसृतेन मृगीं मुदाशयन्त्या
नवनीवारबलिं महर्षिपत्न्याः।
अनुकर्षति वल्कलान्तमंसा-
न्मृगपोतः परितः श्रुतिं वितन्वन् ॥ ४१ ॥

करभैः सहितो मृगेन्द्रशाय:
पुरतः क्रीडति पश्य मित्र! चित्रम्।
मृगराजवधूर्वृषस्य धेर्या
लिहतो स्नेहभरादुमोति पुच्छम् ॥ ४२ ॥

नखदारितदाड़िमीफलोद्य-
द्रुमलग्नं स्वकरं तदा लिहन्तः।
कपयो विविधाङ्गभङ्गिभाजो
विधिसूर्नोर्मुदमुत्तमां वितेनुः ॥ ४३ ॥

गुरुकार्यपरोऽपि पुण्यचित्तै-
र्विहितातिथ्यविधिस्तपोधनौघैः।
घणमाश्रममण्डले स तस्थौ
न महान्तो हि कदापि लङ्घनीयाः ॥ ४४ ॥

अपि तैर्विनयेन सेव्यमानो
न विलम्बं नयवित् स चालम्बे।
असमाहितभर्तृशासनानां
भवति क्वापि न धीमतां प्रमोदः॥ ४५॥

गतराग इवोचकैःसमत्वं
द्रुतमुत्तीर्य हिमाचलं विशालम्।
कृतयोग इवारुरु मोक्षलक्ष्मीं
विबुधाधीशपुरीमसौ प्रपेदे॥ ४६॥

अथ तां रुचिरामनन्तरत्नैः
स्वदसोत्कण्ठितमानसं निरीक्ष्य।
कमलासनसम्भवस्तदानी-
मिदमूचेऽनुगतेन पर्वतेन॥ ४७॥

निजशिल्पकलाविलोकनार्थं
भुवनान्यम्बुजसम्भवः ससर्ज।
तदुपर्युचिता यशःपताका-
मिव देवेन्द्रपुरीमिमामकार्षीत्॥ ४८॥

द्युतिभिर्यदुदारमन्दिराणां
वरमाणिक्यमयूखमेदुराणाम्।
अरुणत्वमवाप शश्चिन्त्या-
नवरूपेण जनैर्निगद्यतेऽसौ॥ ४९॥

इह सौधशते निवेशितानां
विशदानां शशिकान्तधोरणीनाम् ।
अधियामिनि कान्तयः समन्ता-
दपि गङ्गाभ्रममावहन्ति नित्यम् ॥ ५० ॥

अवलम्ब्य चिराय नर्महर्म्ये
त्रिदशाः पार्वणशर्वरीशबिम्बम् ।
समतां दयितास्यमण्डलाना-
मिह कौतूहलतो विलोकयन्ति ॥ ५१ ॥

पवनाः परितोऽपि कल्पवल्लि-
प्रसवामोदमुदारमुद्गिरन्तः ।
श्लथयन्ति सदैव गाढबन्धा-
मपि नीवीमिह कामिनीजनानाम् ॥ ५२ ॥

इह पश्य वयस्य ! कौतुकानि
स्फुटमालोक्य मुखं मृगीदृशानाम् ।
रचयन्ति चिराय कल्पतानि
प्रथयन्तो मुदमुत्तमां चकोराः ॥ ५३ ॥

मदमेदुरवारणेन्द्रदान-
प्रसरत्सौरभलुब्धमानसानाम् ।
पटलान्यलिनां नभोऽवकाशे
दधते जङ्गमसञ्जुकुञ्जशोभाम् ॥ ५४ ॥

परितः पुरवासिनो दिगीशा
लतिका कल्पलता सरिच्च गङ्गा ।
अधिपः खलु यत्र वृत्रहन्ता
कथमेतद्वचसां नु गोचरः स्यात् ॥ ५५ ॥

नियमैर्बहुभिस्तपोभिरुग्रै-
र्वसुदानैरसुभिश्च मुच्यमानैः ।
यतते यदवाप्तुमाशु लोक-
स्तदिदं पत्तनमैन्द्रमुज्ज्वलीते ॥ ५६ ॥

इति वादिनि पर्वते समन्तात्
कुतुकोत्फुल्लविलोचनो महर्षिः ।
दुरवाप्यमनर्जितोरुपुण्यै-
स्त्रिदशाधीशसदः समाससाद ॥ ५७ ॥

अवगम्य समागतं मुनीन्द्रं
स्फुरदानन्दपयोनिधौ निमज्जन् ।
सजलाञ्जनिभानि सन्दधानो
नयनानि द्रुतमागमच्च महेन्द्रः ॥ ५८ ॥

उपसृत्य विधेयकोविदोऽसौ
प्रणनामाद्रिसखं विधेस्तनूजम् ।
अथ तच्च शुभाशिषां वचोभिः
स समन्तादभिनन्दयाम्बभूव ॥ ५९ ।

अथ वेदितुमागमस्य हेतुं
मुनिरादौ समवादि वासवेन
द्रुतमप्युपचक्रमे स वक्तुं
न हि सत्यावसरे हिताय मौनम् ॥ ६० ॥

विबुधेश ! निदेशधारकाणां
प्रकृतं चेदपि जायतेऽभिधानम् ।
क्षमणीयमिदं तदा महद्भि-
र्नहि सन्देशहरा मृषा वदन्ति ॥ ६१ ॥

चतुरश्चतुरब्धिमेखलायाः
पतिरुर्व्याः प्रसरद्भुजप्रतापः ।
यदुवाच यदूद्वहो भवन्तं
तमुदन्तं शृणु शक्र ! सावधानः ॥ ६२ ॥

घनमानपिनद्धमानसायाः
प्रणयिन्या मनसो विनोदनाय ।
अचिरेण सुरद्रुमं प्रदातुं
स्फुटमङ्गीकृतवानहं सभायाम् ॥ ६३ ॥

तदुदारमते ! नतैकचित्ते
मयि देवेश ! दयोदयस्तवास्ताम् ।
यशसे सुकृतात्मनां प्रभूणां
प्रणतेषु प्रणयादृते न पन्थाः ॥ ६४ ॥

किमदेयमुदेति याचकेभ्यो
जगतीह यदुपते ! महोदयानाम् ।
निजमस्थ्यपि हन्त याच्यमानः
स दधीचिः प्रददौ न किं भवद्भ्यः ॥ ६५ ॥

किमपेक्ष्य फलं पयोधरालिः
परितो यच्छति जीवनानि भूयः ।
परमानसपूरणाय नित्यं
सरसानामकृता हि हृद्विलासाः ॥ ६६ ॥

त्वयि वत्सलमानसेऽग्रजन्म-
न्यमराधीशितरि स्फुरत्प्रतापे ।
मम चेन्न भवेदभीष्टपूर्त्तिः
कथमन्ये स्पृहयन्तु बान्धवेभ्यः ॥ ६७ ॥

विबुधेन्द्र ! विलोक्य लोकहृत्तं
विशदं वीक्ष्य यशस्तथात्मनोनम् ।
करुणावरुणालयैर्भवद्भि-
र्विनिधेयो मयि पादपः प्रसादः ॥ ६८ ॥

इदमाह सुरारिरत्युदारं
विदशाधीश ! भवन्तमादरेण ।
अथ यच्च भुजप्रतापदर्पा-
दयमूचे तदपि स्फुटं ब्रवीमि ॥ ६९ ॥

विनयेन मयापि याच्यमानो
यदि दर्पान्न ददासि पारिजातम् ।
असुरेन्द्रविमर्दद्दृष्टसार-
स्तदुदीर्णोऽस्त्वनिरर्थतां स्वपाणौ ॥ ७० ॥

मखभङ्गभवावमाननायां
यदभूः कोपकषायितस्त्वमिन्द्र ! ।
विदितो न जनैस्तदेव किं ते
भुजयोरुग्रतरः पुरा प्रतापः ॥ ७१ ॥

विनयोज्ज्वलमूर्जितञ्च वीर्यं
रिदमाह मे सुरराज ! शार्ङ्गधन्वा ।
निखिलञ्च मया निवेदितं ते
मघवन् ! कृत्यविधौ भवान् प्रमाणम् ।

इति वादिनि हंसयानसूनौ
प्रसरत्कोपभरारुणाननेन्दुः ।
घनशोणितसम्भृत तदानी-
मवहल्लोचनपद्मषन्दमिन्द्रः ॥ ७३ ॥

अथ रोषमनर्गलं कथञ्चि-
न्मदमत्तेभमिव घृणान्निगृह्य ।
सृणिनेव नयेन गर्वगर्भं
शतमन्युर्विधिसूनुमाबभाषे ॥ ७४ ॥

विनयोल्लसितापि शार्ङ्गिणो वाक्
परुषत्वं परियात्यहङ्कृतेन ।
विमलाम्बुरपि स्फुटं स्रवन्ती
भजते भीषणतां हि नक्रचक्रैः ॥ ७५ ॥

प्रणयेन यदाह मां मुकुन्द-
स्तदशेषं परितो विधेयमेव ।
परमस्य वचोभिरत्युदग्रैः
कठिनत्वं समुपैति मानसं मे ॥ ७६ ॥

प्रथयन् बहिरार्जवं समन्ता-
न्मलिनं सन्ततमन्तरादधानः ।
मधुदिग्धमुखो विषावनद्धः
पिशुनः कुम्भ इवानिशं विशङ्क्यः ॥ ७७ ॥

विनयाद् यदि याचते मुरारि-
स्तदलं तस्य समुन्नतैर्वचोभिः ।
अथ शक्तिरुदेति चेत् तदानीं
किमहो याचनयानया मह्यै ! ॥ ७८ ॥

उदयं समवाप्य मूढचेता
महतां न्यक्कृतिमुच्चकैर्विधत्ते ।
स्पृशति प्रसभं समुज्जिहानो
निजपादैरपि कं न वा मृगाङ्कः ॥ ७९ ॥

गिरिराजसुतापि यत्प्रसूनं
लभते प्रार्थनया चिरात् कथञ्चित्।
तमसौ तरुमीहतेऽपहर्तुं
किमसाध्यं समुदेति दुष्टतायाः॥ ८० ॥

तनुते निजगौरवं गदाभृद्
विविधानुग्रहलालितो ममैव।
बत विस्मरति स्म मुग्धचेताः
श्रियमासाद्य नितान्तमात्मनोऽपि॥ ८१ ॥

वद नारद! मद्गिरा मुरारिं
स्वयमायातु स योद्धुमुद्धतश्रीः।
ज्वलिते मम वज्रदाववह्नौ
यदुवीराः शलभा भवन्तु सर्वे॥ ८२ ॥

आगत्याभिमुखं कथञ्चिदपि मे सम्बद्धसैन्यो हरिः
स्याता चेत् क्षणमप्यसौ शमनिधनज्वालावलीकाकुलः।
सज्जाः सन्ति तदासुरेभदलनव्यापारपञ्चानना
गर्वाखर्वसुपर्वयोधनिवहाः कोदण्डदण्डे शरान्॥ ८३

निर्गदितमनुरूपं शौर्यवीर्योरुलक्ष्म्याः
सपदि कुलिशपाणेः सम्यदाद्याकलय्य।
समुचितमिदमुच्चैस्तादृशस्येति जल्पन्
मुनिरपि बहु मेने मौलिनान्दोलितेन॥ ८४ ॥

अथ कथमपि रम्यैर्यामिविलासैस्तदानीं
सुरपतिमनुयान्तं मन्दिवार्यारवीर्य्यम् ।
अतनुतनुमयूखैर्द्योतयन् दिग्विभागा-
नलभत पिशुनोऽसौ सन्निधिं चक्रपाणेः ॥ ८५ ॥

युद्धालोकरसात् परस्परमहादुर्व्वारवैरानलं
यागवागपारसमीरणैरनलतरैरुद्दामसन्दीपयन् ।
ऊर्द्ध्वं सर्व्वमनुक्रमेण स मुनिः कंसद्विषः सन्निधौ
संमूर्च्छन्न मलीमसे हि हृदये सारल्यचन्द्रच्छविः ॥ ८६ ॥

इति वासुदेवविजये महाकाव्ये हिमालयदर्शनो
नाम सप्तमः सर्गः ।

विराजमानो ज्वलदंशुजालै-
र्यत् तापयत्येष जगन्ति नित्यम्।
उच्चैरतो निर्भरसंभृतश्री-
र्धत्ते समन्तादुदयं दिनेशः॥ ४५॥

हेतोः कुतो वा ज्वलनं ज्वलन्तं
बिभर्ति नेत्रेण सदा त्रिनेत्रः।
प्रायः प्रकृत्यैव महानुभावा
स्त्यजन्ति न क्वापि परं प्रतापम्॥ ४६॥

विहाय दण्डं प्रयतेन साम्ना
नोपैति शत्रुर्वशतां कदापि।
उत्सृज्य वह्निं ननु नीरसेकैः
किमश्मसारो मृदुतामुपेयात्॥ ४७॥

मन्नायके विदितां प्रचण्डे
दण्डे समुन्नाविषि कार्यसिद्धौ।
उपायमुपायान्तरकल्पनाया-
मासक्तचित्ताः सहसा लभन्ते॥ ४८॥

पराङ्मुखानां चरमे ह्युपाये
राज्ञामुदयोऽपि भुजप्रतापः।
धत्तेऽवहासं वत निर्विषाणा-
मुग्रः फटाटोप इवोरगाणाम्॥ ४९॥

प्राप्तं समीक्ष्य दनुसूनुनिषूदनोऽसौ
कालं बलप्रमुखहासलसन्मुखेन्दुः ।
गन्तुं सुरेश्वरपुरीं परिपूर्णशक्ति-
र्दामोदरो निजबलानि समादिदेश ॥ ५ ॥

आज्ञामवाप्य महितां महनीयकीर्तेः
सेनापती रणपटुः प्रसरत्प्रतापः ।
उत्साहपूर्णहृदयः पृतनां क्षणेन
सज्जीचकार नवनागरथाश्वपूर्णाम् ॥ ६ ॥

आकर्ण्य शङ्खनिनदं सहसा मुरारे-
र्यात्रां निदेशयति सैन्यपतिः समन्तात् ।
उद्वेलितोदधिरिव प्रसभं तदासौ
संध्यानमे दय दिशो विपुलो बलौघः ॥ ७ ॥

चञ्चत्तुरङ्गपथचारु चलत्पदाति
गर्जद्गजावलि रसद्रथचक्रचक्रम् ।
आलोकयन् बलमनर्गलमर्गलाभं
मेने हरिः करगतं किल पारिजातम् ॥ ८ ॥

उद्भासितः स्फुरदमन्दतनुप्रभाभि-
रालोकितस्मितरसैरमृतायमानैः ।
आमोदयन् कुमुदिनीमिव वाहिनीं ता-
मासीदसौ विधुरिति प्रकटार्थनामा ॥ ९ ॥

आक्लष्टरश्मिरपि सावहितेन यन्त्रा
सद्यः प्रदक्षिणमनुत्तममाव्रजन्ती।
सूर्योदयादिव दिवो विजयाय तेने
ताक्ष्यावली यदुपतेः पुरतः प्रयाणम् ॥ २० ॥

तस्याज्ञया परिजनैः परितः परीता
तत्राजगाम करिणीमधिरुह्य सत्या।
नूनं रराज परिवेषयुता पयोद-
रेखासुपर्युपरि सैव सुधांशुलेखा ॥ २१ ॥

आत्तायुधान् सुमनसः प्रसरत्प्रतापा-
नुपत्तिर्यः प्रवरवीरगणाननेकान्।
आरोहणाय रथनागतुरङ्गमेषु
प्रहृङ्गनेन मधुभिद् स्फुटमादिदेश ॥ २२ ॥

रथ्यान्मनोज्ञमणिराजिविराजिताङ्ग-
नत्युच्छ्रितान् प्रसुरदर्पभृतः प्रवीराः।
पञ्चाननाः क्षितिधरानिव सावहेलं
केचिद्रथांस्त्वरितमारुरुहुः प्रसेन ॥ २३ ॥

सर्वेङ्गितोऽपि चिरलालनया कथञ्चि-
न्निष्पन्दकर्णयुगलः समुदग्रहस्तः।
वेगादुपेत्य पदघातभियोत्प्लुतेन
दुष्टो गजः झपटि केनचिदध्यरोहि ॥ २४ ॥

आरुह्य कश्चन करेणुमतिप्लुतेन
द्रागारुरोह मदमत्तमपि द्विपेन्द्रम् ।
हीनः स्वशक्तिविभवैरपि सत्सहाय-
मासाद्य साधयति को न सुखादभीष्टम् ॥ २५ ॥

फेनाप्लुतं सपदि चर्वयतः खलीन-
मास्विन्नकण्ठमभितश्चलतः सहेषान् ।
अश्वान् कथञ्चिदनुलालनयोर्द्धकर्णान्
वीतश्रममारुरुहुरश्ववरांश्च केचित् ॥ २६ ॥

आरोहणावसर एव समुत्प्लुतोऽपि
वाहस्तदा झटिति केनचिदध्यरोहि ।
तत्कौशलात् सपदि तं प्रशशंसुरन्ये
सत्ये गुणे महति नैव यशो दुरापम् ॥ २७ ॥

प्रासोल्लसत्करतला धृतवैजयन्ता-
स्तुङ्गांस्तुरङ्गनिकरान् परिनर्त्तयन्तः ।
पाथोनिधेरिव सफेनतरङ्गमाला
बभ्राजिरे सपदि सादिवरास्तदानीम् ॥ २८ ॥

पश्चार्द्धनत्युपचितैरिव पूर्व्वकायै-
रश्वा वियत्क्रमणविक्रममाचरन्तः ।
आयन्त्रिता अपि कशाकुशलाश्ववारै-
रारेभिरे विचतुराणि च वल्गितानि ॥ २९ ॥

अत्रान्तरे रिपुहृदस्रपिपासयेव
केतुच्छलाद्रसनयाकलितः स्फुरन्त्या ।
कृष्णाय सूतपतिना रुचिरः भताङ्गः
सद्यस्त्रिलोकजयसिद्धिरिव न्यवेदि ॥ १० ॥

उन्मीलदिन्दुकरचारुतराङ्गशोभै-
र्वेगाधरीकृतनभस्वदुदीर्णवेगैः ।
रिङ्गद्भिरचरणतुर्य्यरवेण सम्यक्
संक्षोभ्यमानमिव तुङ्गतरैस्तुरङ्गैः ॥ ११ ॥

अत्यादरादधिगतेन शिखण्डिवर्गैः
कल्पान्तवारिदघनस्तनितोत्कटेन ।
उद्भ्रान्तचक्रनिनदेन विदीर्य्यमाण-
मन्तः सदा विरचयन्तमरिव्रजस्य ॥ १२ ॥

संवृत्तडिम्बघनिभेन महोपवेग-
प्राग्भारकम्पितसमग्रकुलाचलेन ।
प्रोज्जृम्भमाणमहसा पतगाधिपेन
विभ्राजमानरुचिरध्वजदण्डमुख्यैः ॥ १३ ॥

रत्नप्रहारजतसुन्दरकारवान्तः-
प्रत्युप्तरत्ननिकरस्य रुचिच्छटाभिः ।
देदीप्यमानमतिदीप्ततरैर्महोभि-
र्मार्तण्डमण्डलमिव स्फुटमुज्जिहानम् ॥ १४ ॥

दर्पं सविग्रहमिवोद्धतरैस्तुरङ्गै-
र्मूर्त्तं जगज्जयमिवायुधधोरणीभिः ।
आलोक्य तं रथमतिस्फुरदाननेन्दु-
रानन्दतुन्दिलमना यदुनन्दनोऽभूत् ॥ २५ ॥ कुलकम् ॥

आमुक्ततीक्ष्णतरवारिरुपात्तदण्डः
श्रीमान् महोज्ज्वलशरासनमादधानः ।
विन्यस्य दारुककरे करमेकमारात्
प्रोन्नाम्य पीनकमितां स तमारुरोह ॥ २६ ॥

आरुह्य निर्मलमणिप्रकरराजमान-
मत्युन्नतं रथवरं परिपूर्णधामा ।
चामीकराचलशिरःसमुपाश्रितस्य
चण्डद्युतेः स्फुटमसौ द्युतिमाजगाम ॥ २७ ॥

भास्वन्मणिप्रकरचारुकिरीटधारी
पीताम्बरो विदलिताञ्जनमञ्जुरूपः ।
बिभ्रे सदा कनकभानुगतस्य साम्यं
दीप्तेन्द्रचापपरसस्य नवाम्बुदस्य ॥ २८ ॥

आरोहति प्रसभमेव रथं रथाङ्ग-
पाणौ खलद्विनयनद्युविरोधिभाजः ।
प्रोद्यद्भयं विकटकम्पमथाशु यान्तो
जाता महाविजययानशुभं स्वयंभुः ॥ २९ ॥

एवं बलैः सुविपुलैरनुगम्यमानो
मानोपमर्दनविनोदपरः परेषाम् ।
उद्वेलयन् पटहदुन्दुभिशब्दनादै-
रम्भोनिधोनपि नभो मधुभिद् प्रतस्थे ॥ २० ॥

स्वं सुपत्रमिव भागजितं जवेन
संप्रस्थितं रथमवेक्ष्य रथाङ्गपाणेः ।
पार्थादिभिर्युगपदेव मुदा तदानी-
माजघ्निरे सपदि दुन्दुभयः स्वकीयाः ॥ २१ ॥

भेरीसहस्रयुगपद्धनभाङ्कृतेन
ह्रेषाभिरुद्धतरयस्य हयव्रजस्य ।
चक्रौघघर्घररवैर्गजगर्जितैश्च
दीर्णेव कम्पमगमत् सहसा धरित्री ॥ २२ ॥

चर्माणि सौरपरिधिप्रतिमानि रक्षन्
कौक्षेयकानपि महोग्ररुचीन् विधुन्वन् ।
दर्पात् पदातिनिकरः पुरतो मुरारेः
प्रेङ्खोलयन् निखिलमेव जगज्जगाम ॥ २३ ॥

दाशेरकान् समरगीतिपराः प्रगाढ-
मारुह्य रज्जुषु सरन्ध्रनसाश्रितासु ।
केचिद् वणिग्जनवितीर्णसुराप्रलोभा-
द्धावीरधीमनि हरेरचिरेण चेरुः ॥ २४ ॥

उष्णीषकञ्चुकभृतः स्फुरदुग्रभासः
प्रासासिमुद्गरगदाशरशूलहस्ताः ।
युद्धस्पृहासमुदितभ्रुकुटीतरङ्गा-
ण्यक्षाणि वीरनिकरा रुचिराणि चक्रुः ॥ २५ ॥

सद्यः समुद्यतगदाप्रकरैकदोर्भि-
राक्रम्य भानुमपि पातयितुं समर्थाः ।
मल्लाः प्रफुल्लमनसो धृततीक्ष्णभल्लाः
लीलासमाप्य सुरजिद्विजिगीषु जग्मुः ॥ २६ ॥

उच्छूनकेशरछटाकुटिकयातिवक्राः
सद्यः प्लुतैरुपचितैर्वियदाक्रमन्तः ।
गर्व्या इव प्रचुरमारुतवीरभाजो
रेजुस्तुरङ्गमगणाः पतगानुषेषु ॥ २७ ॥

उल्लिख्य भूमितलमङ्घ्रिपुलायितेन
भूयोऽपि सम्परिलसच्चटुलापपादाः ।
तेऽश्विनो नियमिता निपुणेन यन्त्रा
व्यातेनिरे सपदि ते खलु नर्त्तनानि ॥ २८ ॥

उद्भासितप्रचुरपुष्पचयैः खुरोत्थ-
शब्दोदयानुमितचारुपदप्रचारैः ।
धाराविधौ रयवशात्क्षितितोऽङ्कवर्ग-
र्वाहैरदारि नितरां मरुतोऽपि दर्पः ॥ २९ ॥

उद्यन्महामणिगणद्युतिभिः समन्तात्
प्रोद्दण्डचण्डरुचिमण्डलमुल्लसन्तम् ।
निन्दद्भिरिन्दुकरगौरतुरङ्गयुक्तै-
र्बभ्राजिरे रथशतैः सुतरां ध्वजिन्यः ॥ ४० ॥

वेगाद् व्रजद्भिरितरेतरसन्निवेश-
सङ्घट्टनप्रसरदग्निकणप्रतानैः ।
लेभे तदा विकटनेमिरवैः शताङ्गैः
कल्पान्तसङ्गतपयोधरदुर्धरश्रीः ॥ ४१ ॥

उद्भ्रान्तचक्रचयघर्घरघोरशब्दा-
नभ्युत्थितानिव मिषात् प्रतिशब्दराशेः ।
श्रुत्वा जनैरिदमतर्कि पुनः किमद्धा
प्रारब्धमद्य हरिणा मथनं महाब्धेः ॥ ४२ ॥

चामीकरध्वजशते निहिताः पताकाः
सञ्चालिता विलसता मृदुनानिलेन ।
रेजुः सुराधिपपुरीं परितर्जयन्त्यः
स्वैरं भुजा इव मुरारिपराक्रमस्य ॥ ४३ ॥

संसक्तलोहितकुथैरभिरूपरूपै
स्सुष्यद्भिरुग्रमदवारि तदा गजेन्द्रैः ।
उद्रिक्तगैरिकजुषामुरुनिर्झराणां
सश्रीरहारि महतामपि पर्वतानाम् ॥ ४४ ॥

धूम्रच्छवीन् कनकदामपरीतकण्ठान्
संबृंहतो मदकलान् दधतो मदाम्भः ।
अम्भोधरानिव विलोक्य शिखण्डिवृन्दं
प्रोद्धूय पिच्छमतनोन्मदताण्डवानि ॥ ४५ ॥

आघ्राय गन्धमपरेभमहोत्कराणां
क्रोधादुदञ्चितकरानभिधावमानान् ।
धूताङ्कुशानपि करेणुभिरात्तचित्ता-
नाधोरणाः खलु विनिन्युरिभान् कथञ्चित् ॥४६॥

भास्वानिव प्रचुरकान्तिभरैरुदीर्णै-
र्वीरैः प्रचण्डचरितैः परिवेष्यमानः ।
प्रायात् सुतः सहृदयैरथ वन्दिवृन्दै-
र्वृन्दारकेन्द्रनगरीमरविन्दनाभिः ॥ ४७ ॥

आनन्दकन्दलितसुन्दरमन्दहासा
रम्यांस्त्रिविक्रमगुणाननुवर्णयन्त्यः ।
नीराजनां सपदि तस्य पुरः पुरन्ध्र्यो
मुक्ताफलैः सकुसुमैः प्रणयाद्वितेनुः ॥ ४८ ॥

काश्चित् प्रमोदपरिपूर्णमुखारविन्दा
मन्दायमानगतयोऽधृतपादपद्माः ।
रामा रमारमणमूर्द्धनि सानुरागं
व्यातेनिरे कुसुमचन्दनलाजवर्षम् ॥ ४९

आरुह्य सौधशिखराणि रुदैव गाढ-
मन्विच्छतीभिरभितः कुशलानि सख्ये ।
प्रेक्षा तदा प्रणयिनीभिरवाक्षिताशं
संवीक्षिता यदुवरा नगराज्निरीयुः ॥ ५० ॥

हन्याद्यमानघनदुन्दुभिमन्द्रनादान्
ढक्कासहस्रनिनदानपि दानवारेः ।
आकर्ण्य संचकितमम्बरकाण्ड एव
ब्रह्माण्डसंस्फुटनशङ्कि दधार वेधाः ॥ ५१ ॥

गर्ज्जैरखर्व्वमदगर्व्वभराद्गजानां
युद्धस्पृहोद्धतघनध्वजिनीविरावैः ।
रिङ्गत्तुरङ्गखुरचुम्बिततीरदेशो
वारां निधिः प्रतिदिशं भृशमुज्जजृम्भे ॥ ५२ ॥

नासीरनिःसरदसीमरथाश्वपत्ति-
माद्यन्महाद्विरदवृन्दभराभिभूतः ।
द्रागालुठत्फणगणः कमठस्य पृष्ठे
कष्टेन जीवनमधादुरगाधिनाथः ॥ ५३ ॥

कंसद्विषः प्रचुरवीर्यचमूसमूह-
सञ्चारघूर्णितकुलाचलचक्रवालाम् ।
भारावभुग्नभुजगेन्द्रशिरोनिषण्णां
भूमिं कथञ्चन कृती कमठो बभार ॥ ५४ ॥

क्षुण्णात् क्षणं तुरगतीक्ष्णखुराभिघातैः
क्षौणीतलात् प्रचुरधूलिभिरुद्धताभिः ।
संप्रस्थिते भगवतीन्द्रजयाय जज्ञे
गाढान्धकारमखिलं जगदेव सद्यः ॥ ५५ ॥

न तद्बलं यत्र हयेन जुष्टं
नासौ हयो योऽनधिरूढसादी ।
असौ न सादी न बभार योऽसिं
नासिः स नादीप्यत योऽधिकाङ्गे ॥ ५६ ॥

पातयन्गिरितटानि महान्ति
प्रापयद्घनवनानि विनाशम् ।
शोषयच्च सरितः प्रचुरोदाः
केशवस्य कटकं प्रचचाल ॥ ५७ ॥

उच्चलच्चटुलवाजितरङ्गैः
प्रस्फुरद्विमलचामरफेनैः ।
मत्तवारणमदाम्बुरयौघैः
सागरैरिव परं शुशुभे तैः ॥ ५८ ॥

प्रयाति सर्व्वैः परिजृम्भमाणो
ध्वानो गणस्याप्यथ वाहिनीनाम् ।
चन्द्रोदये पर्व्वणि वर्द्धमान-
पूरस्य निःस्वान इवाम्बुराशेः ॥ ५९ ॥

रणोद्भटमहाभटं नटदुदग्रवेगोत्कटं
मदोग्रगजगर्ज्जितं तुरगचक्रहेषोर्ज्जितम् ।
बलं सुविपुलं हरेः सुरपुरप्रयाणोत्सुकं
कथं कथमपि क्षमा सपदि कम्पमानावहत् ॥ ६० ॥

वाहव्रातखुराभिघातदलितक्षोणीतलप्रोच्छल-
द्धूलीनां पटलैरपूरि परितश्चण्डद्युतेर्मण्डलम् ।
प्रोन्मीलन्मृदुमारुतेन चलितैरुच्चैः पताकायतै-
र्मन्ये तत्तनुमार्ज्जनाविधिरिव प्रारम्भि दर्पोदयात् ॥ ६१ ॥

प्रस्थाने दानवारेर्विपुलगजघटादानवारिप्रवाह-
प्राग्भारैरुच्छलद्भिर्भरभिरथ तुला वारिधीनामधारि ।
किञ्चाद्वेगवल्गत्तुरगखरखुरोत्कीर्णरेणुप्रतानैः
सद्यो विद्योतमानैरपि मरुतुलना तैरशैः द्रागलम्भि ॥ ६२ ॥

स्वर्णद्या वारिपूरप्रसरदुरुतरासङ्गभीतः समन्ता-
दुन्मीलन्मञ्जुमल्लीकुसुमसमुदितामोदसन्दोहवाही ।
उच्चैरापीय पीनस्खलकमलवलद्धारमाध्वीकसारं
वारं वारं नभस्वान् सुदमथितमामाद्धे माधवस्य ॥ ६३ ॥

इति वासुदेवविजये महाकाव्ये प्रयाणवर्णनो
नाम अष्टमः सर्गः ।

## नवमः सर्गः ।



अथाभिरामद्युतिराजिराजितः
पतत्रिभिर्मञ्जुरवैर्विरावितः ।
व्यलोकि लोकत्रितयैकमण्डनं
मुरारिणा वर्त्मनि काञ्चनाचलः ॥ १ ॥

रणोद्धुरास्तु ध्वजिनीषु शार्ङ्गिणो
निशम्य मायामृगगर्जमूर्जितम् ।
द्रुतं समुत्सृज्य निजाम् गुहागृहान्
स्रुतैरखर्वं हरयो विदुद्रुवुः ॥ २ ॥

वनद्विपानां मदगन्धमुल्बणं
क्वचित् समाघ्राय रुषा प्रधावतः ।
गिराद्विनिर्घुर्णतो मदोत्कटा-
नपष्टघातैर्द्विरदान् निषादिनः ॥ ३ ॥

प्रतिप्रसूनप्रसरन्मधुस्रुती-
र्विहाय वल्लीरपि चारुसौरभाः ।
निपेतुरानन्दभृतो मधुव्रताः
कटेषु समदमदेषु दन्तिनाम् ॥ ४ ॥

श्रितः सितोद्यत्कुसुमैर्लताचयै-
र्महागजः पेचकमेचकच्छविः ।
अधो बलाकानिकरैः करम्बितो
बलाहकच्छेद इव व्यराजत ॥ ५ ॥

उदञ्चितोर्द्धाङ्घ्रस्तचलाननाः
समुच्छ्रितं सानुगतं महीभृतः ।
विना समुत्तेजनमप्यधीशितु-
र्हया रयादारुरुहुर्वनायुजाः ॥ ६ ॥

क्वचिन्महोच्चैः शिखराणि धोरितैः
समुद्व्रजन्ती हरिराजिरुज्ज्वला ।
अमानि सिद्धैश्चकितैरिव क्षणं
दिवः पतन्तीव नदी दिवौकसाम् ॥ ७ ॥

कुतूहलात् कूटगतान्युपेयुषां
स्फुटं भटानां मुकुटस्फुटन्मणीन् ।
विलोक्य सानन्दमुदञ्चितेक्षणै-
रधारि तारामतिरञ्जसा जनैः ॥ ८ ॥

खुरैरुदीर्णैर्दलितापि वाजिनां
गिरेर्विरेजे नितरां मणिस्थली ।
स एव धन्यः सहजाद्गुणाद्धि यः
पराभिभूतोऽपि न याति विच्युतिम् ॥ ९ ॥

पदातिपादाभिहताद् यदद्रित-
स्तदा रजो गैरिकरक्तमुद्गतम् ।
विलग्नरेणुः किल तेन भानुमान्
सदैव लोकैररुणो निगद्यते ॥ १० ॥

भरं वहन्तोपि महान्तमुच्चकै-
र्जवेन जग्मुर्बलदर्पिता हयाः ।
समुच्छ्रिते कार्यविधावपि ध्रुवं
न कुण्ठितं मानसमुग्रतेजसाम् ॥ ११ ॥

श्रमोल्लसत्फेनमुखेषु निर्भरं
प्रवृत्तनिःश्वासविशीर्णताम्बुषु ।
गतेषु मान्द्यं महिषेष्वथायने
शिलाखिले सञ्चुकुपुर्भयं जनाः ॥ १२ ॥

विदूरिताशेषजने समन्ततः
पथि व्रजन्त्यो करिणीरधिष्ठिताः ।
विलोकयन्त्यो रुचिरं धराधरं
धरेन्द्रदारा मुदमापुरुत्तमाम् ॥ १३ ॥

निवार्यमाणा कृपयारुणेक्षणैः
कशाकरैः कञ्चुकिभिर्वनेचराः ।
भयाद् द्रवन्तोऽपि विवर्त्तिताननं
विलोकयामासुरहो नृपाङ्गनाः ॥ १४ ॥

अधिष्ठितः केशवसैन्यसञ्चयै-
र्भयादिव व्याकुलपत्त्रिनादभाक् ।
समुच्चयन्निर्झरघर्मसुच्चकै-
र्मुहुर्मुहुः कम्पमवाप पर्वतः ॥ १५ ॥

क्वचित् समुन्मूलितपादपो द्विपैः
क्वचित् समारूढशिरा वनायुजैः ।
क्वचित् समाकृष्टमणिव्रजो जनै-
र्द्विधद्दशामेष हरेर्बलादयात् ॥ १६ ॥

तुरङ्गमाणां खुरघातसम्भव-
व्रणव्यथाशान्तिमुपानयन्निव ।
द्विपेन्द्रपादाहतिभिन्नदौषधि-
द्रवप्रवाहाननवन्महीधरः ॥ १७ ॥

लताभिरुद्यत्कुसुमाभिरादरा-
न्मरन्दबिन्दुस्रवणादुदश्रुभिः ।
हरिस्तदेन्दिन्दिरवृन्दगुञ्जन-
च्छलादिव स्वागतमन्वयुज्यत ॥ १८ ॥

दलावनम्रापल्लवयो मुहुर्मुहुः
प्रसूनवर्षं रचयन्त उच्चकैः ।
समीरणावद्धविनम्रमौलयः
प्रवेमुरेनं प्रणयादिव द्रुमाः ॥ १९ ॥

समन्वितोऽयं हयवाहनादिभि-
रभीषुधारां स्वयमेव धारयन्।
सुवर्णशैलं महसा प्रकाशयन्
सवैनतेयः सवितेव तिल्विषे ॥ २० ॥

अथामृतोयद्रवदीर्घिका हृशो-
र्जगज्जनस्नीपणसिद्धिरूढता।
स्फुरन्महापातकपादपाशनि-
र्व्यलोकि लोकैः सुरलोकनिम्नगा ॥ २१ ॥

निषेव्यमाणा विमलैर्दिजव्रजै-
र्विशुद्धवर्णा शमनी महैनसाम्।
पवित्रयन्ती सततं जगत्त्रयीं
त्रयीव मुख्या द्रवतामुपागता ॥ २२ ॥

पयोभिरब्धासिसुधासहोदरै-
र्विवर्द्धयन्ती नियतं चराचरम्।
अनन्तसन्तापससंहिनाशिनी
महोदयं या ददती प्रसूरिव ॥ २३ ॥

झषव्रजास्फालनसम्भृतैर्भृशं
विभूषिता बिन्दुशतैरनारतम्।
समर्च्यमानेव सुरैः समादरा-
दिवश्च्युतैर्निर्मलमौक्तिकोत्करैः ॥ २४ ॥

निर्जन नैर्मल्यमदेन निर्भरं
प्रकाशयन्ती मुखपङ्कजं मुहुः ।
परिस्फुरत्फेनपरम्पराभिषात्
सदा हसन्तीव शरन्नभःश्रियम् ॥ २५ ॥

समुच्छलत्स्वच्छजलान्तरस्फुरत्-
प्रवालवल्लीपटलच्छलेन च ।
अजस्रसंसारनिकारशान्तये
निषेव्यमाणेव सहस्रभानुना ॥ २६ ॥

क्वचिन्मनोज्ञाविहरिन्मणिव्रज-
स्फुरन्मरीचिप्रकरैः करम्बिता ।
प्रपश्यतां दर्शनसौख्यदायिनी
दिवाकरस्यात्मजयेव सङ्गता ॥ २७ ॥

समुत्थदिन्दीवरगन्धधूपनै-
र्मनोरमैर्विद्रुमदीपमण्डलैः ।
तटोल्लसन्निर्मलकाशचामरै-
रुपास्यमानेव दिवानिशं द्विजैः ॥ २८ ॥

वियन्मनोहारिमरालमण्डलो
महीमहामण्डनमौक्तिकावली ।
पवित्रतावासविलासदीर्घिका
जगन्महामोहतमःप्रदीपिका ॥ २९ ॥

समीरणासङ्गबलात् समुच्छलत्-
पयःपरीवर्त्तविवर्त्तिताम्बुजा ।
विलोकितुं माधवमागतं पुरः
शनैः परावृत्तमुखीव कौतुकात् ॥ ३० ॥

सुचारुवर्णा स्वगुणैरलङ्कृता
महोज्ज्वलोदाररसेन सम्भृता ।
सचेतसां चेतसि तन्वती रतिं
महाकवेर्भव्यतरेव भारती ॥ ३१ ॥ यमकम् ।

सरस्वतीर्थामतिनिर्मलोदकां
विकस्वरैः पद्मवनैर्विराजिताम् ।
विलोक्य तां नेत्रमनोविनोदिनीं
श्रियः पतिः प्रीतिमतीव लब्धवान् ॥ ३२ ॥

शनैः शनैः खेलसरोरुहावली-
विधूनयन्नम्बुकणाभिरञ्चितः ।
सुरस्रवन्त्येव मुदोपढौकितः
समीरणः श्रान्तमतोषयद्विभोः ॥ ३३ ॥

तदापतीर्थाप्सु रथाद्विदूरतो
विवर्द्धमानामलभक्तिभावितः ।
ननाम लोकत्रितयैकपावनीं
विनीतमूर्त्तिर्मुरजित् सुरापगाम् ॥ ३४ ॥

अनर्गलं शीघ्रमसौ समागता
महौघवेगापि सुरारिवाहिनी ।
बभार मान्द्यं त्रिदशापगातटे
प्रभेव भानोरथ विन्ध्यमूर्धनि ॥ ३५ ॥

मनाक् कुशाकर्षणतस्तुरङ्गमा
नियोजिता नीररयेषु सादिभिः ।
द्रुतं ससुस्तैरुदीर्णतेजसो
महौजसां क्वापि न कुण्ठितं मनः ॥ ३६ ॥

प्रणोदितोऽपि प्रसभं नियन्तृभि-
र्मुहुर्मुहुस्तीरमगात् क्रमेलकः ।
विनीयमानः पिशुनो हि साधुभि-
र्जहात्यहो नैव कदापि वक्रताम् ॥ ३७ ॥

दृढामुदारां गुणराजिराजितां
समाश्रिताः केचन नावमादरात् ।
कृपामिवासाद्य विभोर्भवार्णवं
सुखेन तेरुः सुरसिन्धुमञ्जसा ॥ ३८ ॥

स्फुरन्महादुर्व्वहदेहभारतो
निमज्जतो वारिणि वेगभङ्गुरे ।
महद्भुफुत्कारकरौघमत्कुणा-
नवाघयन् सन्तरतो गजान् जनाः ॥ ३९ ॥

क्वचिन्महावर्त्तरये महौजसः
समुत्प्लवन्तो वृषभाः सहस्रशः
अनीतिभाजः समितीव भूभुजः
कथञ्चिदुत्थानमवापुराकुलाः ॥ ४० ॥

अधिष्ठिताः प्राणसमैः प्रियाजनै-
र्न यावदीयुस्तरयस्तटस्थलीम् ।
उदश्चिताक्षः किल तावदुच्चकै-
र्दधार मूर्छां स जनो निरन्तरम् ॥ ४१ ॥

सुरद्विपप्रक्षभवल्लभावलो-
मदान्धगन्धद्विपसङ्गसङ्कुला ।
तरङ्गिणी तुङ्गतरङ्गसङ्गता
भियेव भेजे कलुषत्वमुल्बणम् ॥ ४२ ॥

अनीकिनीभिः परिवारितोऽभितो
द्रुतं समुत्तीर्य्य सरः सुधाभुजाम् ।
बलं दिदेशाशु निवासहेतवे
मनोरमे मेरुशिरस्यधोक्षजः ॥ ४३ ॥

अभीप्सितां वासमहीमनुत्तमां
स्ववाद्यसम्पूर्णतया प्रभावताम् ।
तदा भटानां परमोद्भटश्रियां
त्वराविरासोऽप्यहतो समन्ततः ॥ ४४ ॥

युतायपाददयमुद्रिताननः
घणं समुन्मोल्य दृशाववज्ञया।
पुरः प्रयातानपि वीरपुङ्गवान्
पुनः सुषुप्सुर्मृगराडुपैक्षत ॥ ४५ ॥

बलादथोच्छिद्य मृगेन्द्रसंहतो-
र्गजेन्द्रमुक्ताफलजालसङ्कुलम्।
महौषधीभिर्ज्वलिताभिराचितं
गुहागृहं भूमिभुजः समाश्रयन् ॥ ४६ ॥

हिरण्मयस्तम्भचयेषु सम्भृतैः
शुभैर्विरेजे वसनालयव्रजैः।
समुन्नतैरेकपदे परःशतैः
सिताभ्रबिम्बैरिव मेरुमूर्धसु ॥ ४७ ॥

वितम्यमानैः पटवेश्मसञ्चयैः
नियम्यमानैस्तुरगैर्गजैरपि।
प्रसार्यमाणैर्विविधापणोत्करैः
पुपोष शोभां नितरां वरूथिनी ॥ ४८ ॥

अथोपवेश्याग्रपुरः करेणुकां
करावलम्बैरवतार्य सादरम्।
विदूरयन्ती मनुजान् वरालया-
नजीगमन् कञ्चुकिनो नृपाङ्गनाः ॥ ४९ ॥

विहाय तस्यान्यथ ताः स्थिताः सुखा-
न्नवीनदूर्वादलकोमले स्थले ।
उदश्वयन्त्यो जवनीः शनैः शनैः
समीरणासङ्गमवापुरादरात् ॥ ५० ॥

निपीय शीतं सलिलं समुत्थितान्
मुहुस्तटाघातसुखेन दृप्यतः ।
विधाय कच्छाद् द्रुमसंयतान् गजा-
नयूयुपन् ग्रासशतेन हस्तिपाः ॥ ५१ ॥

अथोपवेश्याशु विमोचयन् गुणान्
विभर्त्ति गोणीं नहि यावदीशिता ।
हठोत्थितस्तावदधावदुष्ट्रको
दधाति किं स्थैर्यगुणं गुणोज्झितः ॥ ५२ ॥

क्वचित् समाकल्पितपाकभोजनं
क्वचित् समारब्धमनोज्ञताण्डवम् ।
क्वचित् समासादिततल्पकल्पनं
तदा विरेजे बलमुज्ज्वलं हरेः ॥ ५३ ॥

फलैर्विशालैरतिनिर्मलैर्जलैः
समुल्लसत्पल्लवसंस्तरैरपि ।
स्फुरन्मनोहारिमणिप्रदीपकै-
र्महीभृतातिथ्यमकारि शार्ङ्गिणः ॥ ५४ ॥

हृद्यावसक्तवरभूषणभूषितेन
शृङ्गार्पितप्रचुरवस्त्रघटोज्ज्वलेन।
अभ्यागते मुररिपावपि तेन लक्ष्मीः
संप्रापि कापि किमुदेति न साधुसङ्गात्॥ ५५॥

मत्तेभव्रजगर्जितैरुपचितैर्हेषारवैर्वाजिना-
मुद्यन्मङ्गलसम्मृदङ्गनिनदैरुद्रावलीनर्दितैः।
गङ्गावारिमिषात् सुताम्बरकरोदाक्रन्दमत्युच्चकैः
श्रीभर्तुर्बलभारभङ्गुरवपुः क्षेमादिव क्ष्माधरः॥ ५६॥

अथ शैलविलासकौतुकं
ललितं वीक्षितुमुत्कचित्तया।
प्रिययेव घनानुरागया
विचकासेऽम्बरसीम्नि सन्ध्यया॥ ५७॥

दधता करमम्बरान्तरे
स्फुरदस्ताचलकुम्भचारिणा।
दयितेव चिरानुरागिणा
चरमाचुम्बि दिगुष्णरश्मिना॥ ५८॥

अपराचलबन्धुजीवक-
स्तवकस्तोमरुचो दिवाकरे।
हृदयानि रथाङ्गपक्षिणा-
मदुनोद्भाविवियोगवेदना॥ ५९॥

वियदङ्गनविद्रुमस्थली
दिवसाशोकविलोलपल्लवः ।
चरमाचलकुम्भिकम्बलो
विमलोऽलक्ष्यत भानुमण्डलः ॥ ६० ॥

अतन्ततेजा अपि तीक्ष्णदीधिति-
स्तेजस्यमूनामिव सोढुमक्षमः ।
दिनश्रिया सार्द्धमयान्तराद्धे
को नाम पत्नीं यतते न रक्षितुम् ॥ ६१ ॥

तदेव धन्यं मिथुनं जगत्यां
यस्येदृशं प्रेम पवित्रमेतत् ।
उदीरयत् कूजनकैतवेन
संशिश्रिये पक्षिकुलं कुलायान् ॥ ६२ ॥

वसुत्रयं प्राप्य रविर्निमज्ज
खेदादिवाब्धौ वसुभिर्नवीनैः ।
अन्यत्र पूर्णः समुदेति चन्द्रः
क्षयोदयौ नित्यमुपैति लक्ष्मीः ॥ ६३ ॥

उद्भासयन्नथ नभः कनकावदातै-
र्ज्योतिर्भिरब्जविनिमीलनसिद्धमन्त्रः ।
आनन्दयन् कुमुदकाननमुद्गतश्रीः
शीतद्युतिः कनकशैलमलञ्चकार ॥ ६४ ॥

आरोपितो वियदनर्गलवेदिकायां
पीयूषपूरद्दविरुद्गतकान्तिरिन्दुः ।
चेतोऽनिशं वशयितुं रसिकस्य काल-
होत्राहुतो मदनवह्निरिवाविरासीत् ॥ ६५ ॥

हैमाम्बुजैरिव वियद्धरणालयस्य
पीतांशुकैरिव निशानलिनेक्षणायाः ।
काश्मीरपङ्कनिचयैरिव दिग्वधूना-
मुद्भासितं भुवनमिन्दुमहःप्रतानैः ॥ ६६ ॥

विभ्राजमानघनकान्तिसमुज्झितान-
ज्वालायितो विततशैत्यकलङ्कधूमः ।
आदीपयन्नुदयशैलवनीं तदानीं
दावानलो विधुरमानि वियोगिनीभिः ॥ ६७ ॥

उद्यत्तमालदलभासि नभोऽवकाशे
रेजुर्निशाकरकरप्रकराः समन्तात् ।
विस्तारिता इव हरिन्मणिवेदिकाया-
मुद्रिक्तकुङ्कुमरसाः कुसुमायुधेन ॥ ६८ ॥

सङ्गार्थिनी ललितमन्मथवल्लभस्य
रात्रिर्वियद्विमलतल्पतले निषण्णा ।
संवीचितुं मुखमुदारतरं दधार
प्रोद्दामदर्पणमिषेण शशाङ्कबिम्बम् ॥ ६९ ॥

पीयूषनिर्म्मलजलप्रकरेण पूर्णः
कान्तिप्रवालपटलं सकलं दधानः ।
कन्दर्पमङ्गलमहाकलसः सितांशु-
रुद्यन्नभस्तलमलङ्कृतमाततान ॥ ७० ॥

सञ्चारयन् मृदुकरान् परितः प्रजाना-
मामञ्जयन् मुदमतीव समिद्धलक्ष्मीः ।
स्फीताम्बरप्रचुरकान्तिभराभिरामो
राजा जगद्वलयमुज्ज्वलयाञ्चकार ॥ ७१ ॥

ताराभिरामगजमौक्तिकपंक्तिहार-
हृद्येन निर्म्मलगुणोत्करगुम्फितेन ।
वक्षःस्थले ललितभासि निशारमण्या
रब्धैणनायकदशापि सुधाकरेण ॥ ७२ ॥

उज्जृम्भमाणघनभासि तुषाररश्मौ
स्फीता दिशो दृश विनोदपराश्चकोराः ।
आमोदिनी कुमुदिनी विमलं विहायः
को वा बिभर्त्ति न सतामुदयेन मोदम् ॥ ७३ ॥

शीतद्युतिद्युतिनिरस्तसमस्तशोभा-
सर्व्वस्वमम्बुजवनं सहसा विहाय ।
श्रीरभ्युपाय कुमुदानि मुदा तदानीं
निःस्वेषु कः प्रणयबन्धनमादधाति ॥ ७४ ॥

श्रीमान् वियद्दिपिनसीम्नि यथा यथा वा
तारापतिः करमुदारतरं ततान।
दिक्चक्रवालभुजगप्रकरस्तथैव
सद्यो जरत्तिमिरकञ्चुकमुन्मुमोच॥ ७५॥

स्फीताम्बरा चलचकोरविशालनेत्रा
तारोल्लसद्विमलभूषणसम्भृतश्रीः।
चन्द्रानना कुमुदसौरभभाविताङ्गी
सम्मोदमाशु रजनीरमणी वितेने॥ ७६॥

अत्रान्तरे विवेशाशु विजया गिरिजाश्रया।
स्वलोकं क्रमजोद्दिशाद् राजहंसीव मानसम्॥ ७७॥

इति वासुदेवविजये महाकाव्ये सुमेरु-
स्थितिर्नाम नवमः सर्गः।



## दशमः सर्गः ।

अथ रम्ये सदानन्दमये कैलासभूधरे ।
अरुणारुणरागेण दिग्वधूरम्बरन्यस ॥ १ ॥
समं नक्षत्रमालाभिरालीभिरिव बालिका ।
आसन्नप्रियवैकल्या चन्द्रिका क्षामिमाययौ ॥ २ ॥
आलाप्य भैरवं रागं भैरवानन्दवर्द्धनम् ।
तुम्बुरुर्गीतिमाधुर्य्यै रोदसी समपूरयत् ॥ ३ ॥
माद्यवत् स्निग्धकारिण्या निशाया विरहादिव ।
तरूणां पल्लवान्तादस्रवन्नस्रबिन्दवः ॥ ४ ॥
दूर्व्वादलेषु मुक्ताभो रुरुचे शिशिरोत्करः ।
मन्ये श्यामाविलासिन्या विशीर्णा हारयष्टिका ॥ ५ ॥
सिद्धानां रुद्रतोषार्थं रुद्राध्यायं प्रगायताम् ।
उदितान्यनुकुर्व्वन्तः शुकास्तेतांस्यमूमुचन् ॥ ६ ॥
विक्रीडन् कुसुमस्तोमैर्भ्रासयंश्च लतावधूः ।
तुषाराम्बुकणावाहो ववौ गन्धवहः शनैः ॥ ७ ॥
उद्धूय पुच्छमानम्य शिरयाघूर्ण्य लोचने ।
वायुना कण्ठमापूर्य्य कलकण्ठः कलं जगौ ॥ ८ ॥

त्यजन् कैरविणीप्रीतिं मञ्जु गुञ्जन् मधुव्रतः ।
उज्झियमानमाधुर्य्यं चुचुम्ब नलिनीमुखम् ॥ ९ ॥
अथ प्रोज्ज्वलबालार्कसिन्दूरबिन्दुमादरात् ।
सीमन्ते पूर्व्वदिग्वध्वाः सखीवोषा न्यवेशयत् ॥ १० ॥
तदासौ परिवेशेन स्फुरदम्बरमाश्रितः ।
पद्मनाभस्य नाभिस्थः पद्मयोनिरिवाबभौ ॥ ११ ॥
शारिकामागधीगीतैर्बोधिता गिरिजा तदा ।
विजहौ वनदेवीव शयनं कुसुमाचितम् ॥ १२ ॥
आयाति प्रत्यहं प्रातस्तन्निवेशं षडाननः ।
अर्चितुं चरणौ मातुः प्रीतिपुष्पेण सादरम् ॥ १३ ॥
अथ तेन सहायातौ शिखण्डी च शिखण्डिनी ।
उमया लालितौ स्नेहात् ताण्डवानि वितेनतुः ॥ १४ ॥
पूर्व्वेद्युः पुरभेत्ता यां श्यामाङ्गीं भुजगाङ्गनाम् ।
कौतुकात् कौतुकलेन देव्या हस्ते न्यधात् स्वयम् ॥१५॥
प्रादधे नीलकण्ठस्य कण्ठे मरकतप्रभे ।
स्वर्मसादतयासौ तां कङ्कणीकृतविग्रहाम् ॥ १६ ॥ युग्मम् ॥
कुमारो वर्णयामास तत्साहश्यमनुस्मरन् ।
तदा वैकुण्ठकण्ठस्थां फुल्लेन्दीवरमालिकाम् ॥ २० ॥
अथोवाच गुहं गौरी विम्लानमुखपङ्कजा ।
स्मारितास्मि त्वया वत्स ! व्याजात्संकल्पितस्य मे ॥ १८ ॥
अद्य मे हृदयं तात ! नितरामवसीदति ।
स्मरन्त्या मलिनं हन्त पद्मासदनपङ्कजम् ॥ १८ ॥

चञ्चत्सुधांशुवक्त्रे ते चकोरायितचित्तया ।
तत्त्वया विस्मृतं पुत्र ! साम्प्रतं हृदयेप्सितम् ॥ २० ॥
"एकदा सत्यभामाया भामिन्याः पुरतः पुरा ।
प्रतिज्ञातं पुष्पदानं पारिजातस्य शौरिणा ॥ २१ ॥
ततो दूतमुखैस्तेन तत्पुष्पं प्रार्थिते हरिः ।
विना युद्धं न दास्यामि कदापीत्युक्तवान् स्वयम्" ॥ २२ ॥
श्रुत्वैतन्नारदमुखादमरेशविचेष्टितम् ।
सुरश्रियं समानेतुं प्रेरिता विजया मया ॥ २३ ॥
इन्दिरा ह्यो निशीथिन्यां हरिणीव हरेर्भयात् ।
वेपमाना तया सार्द्धमाययौ मम मन्दिरम् ॥ २४ ॥
ध्वान्तांशुकेन संवीता बभौ तत्तनुवल्लरी ।
यमुनाच्छपयोमग्ना काञ्चनी प्रतिमा यथा ॥ २५ ॥
मयोत्सुकेन दृष्टासौ तत्कारणमभाषत ।
प्रकाशयाद्य मातः ! यसर्व्वाहमिदं तमः ॥ २६ ॥
ततो वीततमश्छन्ना खिन्नापि शक्रदुर्नयात् ।
उषःश्रीरिव निर्मुक्तमेघा सा शुशुभे भृशम् ॥ २७ ॥
ऊचेऽथ दयिता सा मे सेवस्व मयि सुस्मितः ।
यद्य वत्सलां कन्यां स्मरस्व ! चिराद्दृते ॥ २८ ॥
ततश्च कथयामास वरुणानीमुखाच्छ्रुतम् ।
स्वर्गप्रयाणं कृष्णस्य पारिजातजिहीर्षया ॥ २९ ॥
किञ्चान्यदपि सा प्राह दीर्घं निःश्वस्य भाविनी ।
सुनासीरस्य पैशुन्यमैश्वर्यमदकारितम् ॥ ३० ॥

"शचीपरिणयं नाम नाटकं मुनिना कृतम् ।
वीक्षितुं तत्प्रयोगेण शिक्षिताः सुरयोषितः ॥ २१ ॥
एकदा तत्प्रसङ्गेन पुरस्तादमरेशितुः ।
अनिच्छन्त्यापि पौलोम्या भूमिकाङ्गीकृता मया ॥ २२ ॥
अथ मत्पुरतो न्यस्य चित्राणि त्रिदिवौकसाम् ।
सख्यो मां प्रोचुरेतेषु कतमः सखि ! ते प्रियः ॥ २३ ॥
अनीप्सया सूचितस्य स्मरन्त्या पुरुषोत्तमम् ।
महेन्द्र इति वक्तव्ये मयोपेन्द्र इतीरितम् ॥ २४ ॥
गोत्रस्खलनमेतन्मे श्रुत्वा क्रोधसमन्वितः ।
आः पापे ! कथमद्यापि प्रीतिस्ते नन्दनन्दने ॥ २५ ॥
इत्युक्त्वासौ निचिक्षेप केशेष्वाकृष्य मे स्वयम् ।
करेणोन्मूल्य नलिनीं प्रमत्तः कलभो यथा" ॥२६॥ युग्मम् ॥
इत्येवं दुर्नीतिं तस्य तर्कयन्ती पुनः पुनः ।
ररोद बाष्पकण्ठी सा दृष्ट्वामुखेक्ष्य भाविनीम् ॥ २७ ॥
तदा जिगाय तन्नेत्रं सन्तताश्रुसमाकुलम् ।
तुषारासारसङ्कीर्णमिन्दीवरमनिन्दितम् ॥ २८ ॥
अथ सत्क्रेण मन्त्रीव निर्विशेषां वचोऽमृतैः ।
तामाश्वास्य दिवं भूयः प्रापयं त्वरया तया ॥ २९ ॥
मदर्थं पारिजातस्य प्रसूनं प्रार्थितः पुरा ।
कपर्दिन्यपि कार्पण्यं प्रथयामास वासवः ॥ ४० ॥
तेनावधीरिता खेदादनीशा हृदयस्य च ।
ससर्जाहमतिप्रेम्णा पारिजातवनं महत् ॥ ४१ ॥

मयापि कुसुमं दातु वासुदेवाय शक्यते ।
तेन किं पूर्य्यते तात ! प्रतिज्ञा तस्य कर्हिचित् ॥ ४२ ॥
अद्य तद्दिष्टनिष्पर्यं योद्धुकामो बलारिणा ।
सन्निष्टते रसांगो सबलोऽसौ बलानुजः ॥ ४३ ॥
अधुना दूतरूपेण त्वमस्मात् दिवं व्रज ।
यतो मे भ्रातृवात्सल्यं वर्त्तते पुरुषोत्तमे ॥ ४४ ॥
तथा तथा प्रयत्नश्च कार्य्यो वत्स ! त्वया खलु ।
यथा दद्यात् तरुवरं पारिजातं सुरेश्वरः ॥ ४५ ॥
प्रच्छन्नं रूपसत्वाय सत्प्रभावैः यद्वलन ।
प्रभावं वर्णयन् विष्णोर्जिष्णुं प्रापय मार्द्दवम् ॥ ४६ ॥
सवादैर्यं प्रचोमिन मर्व्वं वृत्तान्तमस्त्वसौ ।
ज्ञात्वात्मसंहृतिं तात ! रक्षयि ब्रूहि केशवम् ॥ ४७ ॥
इत्येव भाषमाणायाः सादरं कौञ्चदारणः ।
अशृणोच्छ्रणोद्गारां तामुदारां मुदा गिरम् ॥ ४८ ॥
अथाज्ञां मातुरादाय शिरसा मालिकामिव ।
प्रतस्थेऽसौ महासेनः सुनासीरनिकेतनम् ॥ ४९ ॥
सदोपमीयते तेन हेमाङ्गः शिखिवाहनः ।
यदीन्द्रधनुराश्लिष्य स्थिरः स्यात् तड़िताश्रयः ॥ ५० ॥
अथ निर्भरभूभार-हारिणो सुरवैरिणः ।
दूतोऽसौ त्रिदिवं प्राप निभृतं त्वकवाहनः ॥ ५१ ॥
आसाद्य त्रिदशाधीश-संसद गरुड़च्छविः ।
जगाद महसाखर्व्वं गर्व्वगर्भाः-पुरा गिरः ॥ ५२ ॥

विक्रमाक्रान्तदिक्चक्र-चञ्चत्कीर्त्तिहिमद्युतेः।
दूतोऽहं यदुवीरस्य सुपर्णस्यासुपस्थितः॥ ५३॥
चतुरश्चतुरम्भोधि मेखलाया भुवः पतिः।
यदुवाच मुरारातिः सुराधीशावधेहि तत्॥ ५४॥
याचितः कतिशो नैव भवान् देवद्रुमं मया।
नाप्यामि भवताकारि मयि सानुग्रहं मनः॥ ५५॥
तदायातोऽस्मि रभसादद्याहमतिथिस्तव।
समालोच्य सम स्वीयैरत्र युक्तं विधीयताम्॥ ५६॥
आवयोः सदृशौ कृष्णा जिष्णो! स्वर्गद्रुमं प्रति।
विना पौरुषमेतस्य कोऽपि नातः परः प्रभुः॥ ५७॥
इत्यालोच्य वचोऽस्माकं स्मृत्वा स्वीयञ्च भाषितम्।
सङ्ग्रामाङ्गणसोमानमलङ्कुरु बलान्तक!॥ ५८॥
मद्दोर्द्दण्डमहोचण्ड-शरकाण्डनिपीड़िताः।
दिव्यं स्वौर्या न वेत्स्यन्ति कान्दिशीका दिवौकसः॥५९॥
विद्राव्य भवदुद्दाम वाहिनीगणमोजसा।
यदकारि न केनापि तद्विधातास्महमाहवे॥ ६०॥
मदुद्भ्रान्तगदाघात-विदीर्य्यद्गण्डमण्डलः।
मदाम्भोऽप्यभ्रमातङ्गो न स्थिरीभावमेष्यति॥ ६१॥
स्वर्गिणां जीवहव्यानि जुह्वता विशिखानले।
मयाद्ययाम्बुजक्रोड़े पारिजातः फलीकृतः॥ ६२॥
कुण्डलीकृतकोदण्डो यमदण्डोपमैः शरैः।
अद्य सद्यो विधास्यामि निर्द्दैवतमिदं जगत्॥ ६३॥

महाहिनीगणान्दोल-क्षोभभाजि जगत्त्रये ।
संप्राप्नोतु विधातापि क्षणमत्यन्तशङ्कितम् ॥ ६४ ॥
मयि बिभ्रति कोदण्डं के वराका दिवौकसः ।
किमुदेति तमः क्वापि प्रखरे भाति भास्करे ॥ ६५ ॥
अन्यथा शिञ्जिनीं शार्ङ्गे यावदारोपयाम्यहम् ।
विलासः सुरनारीभिस्तावदेवानुभूयताम् ॥ ६६ ॥
ख्यातासि यदि संग्रामे वीरव्रतमनुव्रजन् ।
तदा द्रक्ष्यसि मे चण्ड-दोर्दण्डद्वयजृम्भितम् ॥ ६७ ॥
इत्यवेत्य सुराधीश ! मयि धेहि तव द्रुमम् ।
सीमन्तेषु सुरस्त्रीणां सन्तु सिन्दूरबिन्दवः ॥ ६८ ॥
देहि देवद्रुमं यक्ष ! ममता मयि का तव ।
प्रणयो वर्द्धतामुच्चैरावयोरावयोरिव ॥ ६९ ॥
इत्यमाख्यातमखिलं भाषितं केशिविद्विषः ।
अथ यच्च मयेदानीमुच्यते तन्निशम्यताम् ॥ ७० ॥
कः सहेत जगत्येवं तेजो द्विविदविद्विषः ।
रुणद्धि सिकतासेतुर्जलोच्छ्वासं किमम्बुधेः ॥ ७१ ॥
दूरादपि धनुर्ध्वानान् शुलाक्षो शार्ङ्गधन्वनः ।
कस्तथास्ति महावीरो यो धीरस्तिष्ठति क्षणम् ॥ ७२ ॥
क्रीडया छिन्दता तेन बाणबाहुमहावनम् ।
रणे न गणिता रुद्राः कोऽन्ये क्षुद्राः सुधाभुजः ॥ ७३ ॥
अस्ति कस्तादृशो लोके प्रतापोग्रपराक्रमः ।
युद्धे यः सङ्गतामद्य शार्ङ्गिणा रणरङ्गिणा ॥ ७४ ॥

बलफाल्गुनकामाद्याः सन्तु वीरा मधुद्विषः।
अहमेव क्षमो हर्तुमेकः सुरमहीरुहम् ॥ ७५ ॥
इत्युच्यमाने प्रसभं दर्पोद्धूतेन चक्रिणः।
तरसैव सुरेशस्य शोणतां दधिरे दृशः ॥ ७६ ॥
पराहतोऽपि दूतोक्तैस्तरङ्गैरिव वारिधिः।
तत्याज न हरिः स्थैर्यं सह्याचल इवोच्चकैः ॥ ७७ ॥
प्राग्विप्रलापतोऽस्यास्याः स्फुलिङ्गा निरयानिव।
स्तनितश्रवणात् पूर्वं दृश्यन्ते तडितां कणाः ॥ ७८ ॥
अथ रोषारुणीभूत लोललोचनरोचिषा।
लोपयन् संसदागारं समाधे जलसूदनः ॥ ७९ ॥
पुरैव श्रुतमस्माभिर्नारदात् कथजल्पितम्।
वैनतेयाधिकं किञ्चित् त्वया नाद्य निवेद्यते ॥ ८० ॥
परन्तु यदि संग्राम-कामस्ते नन्दनन्दनः।
तदायातु समं शौर्यैरशनेरस्य सम्मुखम् ॥ ८१ ॥
गाढाहङ्कारसञ्चार-क्रूरा यदुपतेर्गिरः।
यास्यन्ति व्यर्थतां सद्यः शरद्घनरवा इव ॥ ८२ ॥
मौनमाश्रयते सूर्यस्त्रिलोकीं तापयन्नपि।
न प्रायः प्रौढमहसो विकत्थन्ते कदाचन ॥ ८३ ॥
लालितोऽपि मयोपेन्द्रः प्रकाशयति वक्रताम्।
सुधासिक्तोऽपि सन्तापमातनोति हुताशनः ॥ ८४ ॥
वर्धितस्तापयत्युच्चैर्दहत्याशु समाश्रयम्।
स्वभावः कोऽपि दुर्ग्राह्यः खलस्य ज्वलनस्य च ॥ ८५ ॥

स्नेहैः संवर्द्धमानोऽपि मालिन्यं तनुतेऽधिकम् ।
न जहाति च कौटिल्यं पिशुनः केशपाशवत् ॥ ८६ ॥
समुदेति प्रदोषेषु न तेजः सहते क्वचित् ।
अन्धकार इव क्रूरः सदा जगति दुर्ज्जनः ॥ ८७ ॥
तिरस्करोति गर्व्वान्धो गुरूनपि गतत्रपः ।
नान्दोलयति किं शैल-शिखरं चपलोऽनिलः ॥ ८८ ॥
यद्वादि मुकुन्देन निजवीर्य्यमदोष्मणा ।
तद्युक्तमेव वीराणां यदि श्रेयान् स सङ्गरे ॥ ८९ ॥
क्व तेजः सुरवीराणां जगद्विजयलाञ्छितम् ।
क्व मानवगणैर्युद्धं विदधाति न किं विधिः ॥ ९० ॥
धावा किमद्य संरोद्धुं शिशसुवेण सिन्धुरः ।
मृणालकण्टकाग्रेण शाखा वा व्यद्धमिष्यते ॥ ९१ ॥
अहो नु शिशुकग्रामैः संक्षुभ्यात् महोदधिः ।
पक्षवातैः पतङ्गस्य शैलराडपि कम्पताम् ॥ ९२ ॥
अस्मदस्त्रसमुद्भूत-ज्वालाजालमहानलः ।
भूलोकं भस्मसात्कर्त्ता सापराधेऽद्य माधवे ॥ ९३ ॥
क्षान्तमेव मया सर्व्वं यद्वादि मुरारिणा ।
दूषणेऽपि यदज्ञानामप्रतैव समर्थनम् ॥ ९४ ॥
यातु सत्वरमद्यापि निहत्य यदुनन्दनः ।
न सन्तु यदुवीराणां दारा शरात्तकर्षिताः ॥ ९५ ॥
नूनं मत्योर्व्वशीभूतः केशवः स्वर्गमाययौ ।
किं भूयः प्रतियात्यैष स्वरचोः प्राप्य सङ्गताम् ॥ ९६ ॥

इत्युक्तवति सक्रोधं शक्रेऽस्मिन् क्रूरचेष्टिते ।
प्रत्युवाचाशु दूतोऽसौ प्रहसन्निव कौतुकात् ॥ ९७ ॥
उक्तमुक्तमुपेन्द्रस्य तवापि वचनं श्रुतम् ।
कलहे युवयोरिन्द्र ! भद्रं नाकलयाम्यहम् ॥ ९८ ॥
ध्रुवं दैत्यौघसंहाराज्जाता ते कीर्त्तिवल्लरिः ।
आशु यास्यति संशोषं कंसारेः क्रोधवह्निना ॥ ९९ ॥
परन्त्वहमिदं मन्ये दृष्टतद्वीर्य्यवैभवः ।
हस्त एवास्ति विन्यस्तः पारिजातो रमापतेः ॥ १०० ॥
प्रतापाक्रान्तदिक्चक्रे धृतचक्रेऽस्य चक्रिणि ।
शक्रादयः क्रतुभुजः के वा युद्धमहाक्रतौ ॥ १०१ ॥
तदुपेहि सगीर्व्वाण गणो मानोन्नतो रणम् ।
हर्य्यक्ष इव यूथेशं लक्ष्मीशस्त्वामपेक्षते ॥ १०२ ॥

उदीरयन्नेवमथ प्रकामं
स गर्व्वगर्भं पुरतो मघोनः ।
वार्त्तामिमां वक्तुमना मुकुन्दं
प्रतीक्षमाणः समयं प्रतस्थे ॥ १०३ ॥

इति वासुदेवविजये महाकाव्ये कुमारदौत्यो
नाम दशमः सर्गः ।

# एकादशः सर्गः ।

अथ हरिः परितः परिवारितः
सहचरैरमरैरिव वासवः ।
कनकशैलसुदेशक कौतुकी
सुरुचिरं रुचि-रञ्जितपादपम् ॥ १ ॥

विदलिताञ्जनपुञ्जसमत्विषां
ललितनिर्मलनीलमहाश्मनाम् ।
स्फुरितकान्तिकदम्बकडम्बरैः
सततमं त मसंख्यशिखान्वितम् ॥ २ ॥

सुरभिसुन्दरकुन्दलतास्फुटत्-
कुसुमवृन्तभृङ्गनिनादितम् ।
चकितचारुचमूरुचयाश्रितं
सुविपिनं विपिनद-महीरुहम् ॥ ३ ॥

नवहरिन्मणिमेदुरकान्तिभि-
र्घनदलावलिभिः पिहिताम्बरैः ।
अविरतं विततैर्मततीशतै-
र्ललित-मीलित नीप-वनावृतम् ॥ ४ ॥

इत्युक्तवति सक्रोधं शक्रेऽस्मिन् क्रूरचेष्टिते।
प्रत्युवाचाशु दूतोऽसौ प्रहसन्निव कौतुकात् ॥ ९० ॥
उक्तमुक्तमुपेन्द्रस्य तवापि वचनं श्रुतम्।
कलहे युवयोरिन्द्र! भद्रं नाकलयाम्यहम् ॥ ९८ ॥
ध्रुवं दैत्यौघसंहाराज्जाता ते कीर्त्तिवल्लरिः।
आशु यास्यति संशोषं कंसारेः क्रोधवह्निना ॥ ९९ ॥
परन्त्वहमिदं मन्ये दृष्टतद्वीर्य्यवैभवः।
हस्त एवास्ति विन्यस्तः पारिजातो रमापतेः ॥ १०० ॥
प्रतापाक्रान्तदिक्चक्रे धृतचक्रेऽथ चक्रिणि।
शक्रादयः क्रतुभुजः के वा युद्धमहाकृती ॥ १०१ ॥
तदुपेहि सगीर्व्वाणगणो मानोन्नतो रणम्।
हर्य्यंच इव यूथेशं लक्ष्मीशस्त्वामपेक्षते ॥ १०२ ॥

उदीरयन्नेवमथ प्रकामं
स गर्व्वगर्भं पुरतो मघोनः।
वार्त्तामिमां वक्तुमना मुकुन्दं
प्रतीक्षमाणः समयं प्रतस्थे ॥ १०३ ॥

इति वासुदेवविजये महाकाव्ये कुमारदौत्यो
नाम दशमः सर्गः।

सुरभिशीततमेन नभस्वता
मृदुलयापि च पल्लवशय्यया ।
वपुषि येन सदैव निषेवितें
रुचिरता-चिर-ताप-भृतामहो ॥ १० ॥

दलितकुम्भमतङ्गजशोणित-
प्रकरपूर्णमृगेन्द्रनखद्युतिः ।
दिशति यत्र पलाशमहीरुहां
मुकुलता कुलता गजमानसे ॥ ११ ॥

मसृणमञ्जुविशालहिरण्मय-
स्थलपरिस्खलदङ्घ्रिचयान् मृगान् ।
दधति यत्र सुखेन तरुव्रजो
द्रुततया ततयापि समन्वितान् ॥ १२ ॥

अथ पृथातनयो विनयोज्ज्वलो
नगविलोकिनमाह सुरद्विपम् ।
विमलयन् गगनं हसिताद्भुती-
ह्लसितया सितया दशनश्रिया ॥ '

इह नवोन्नतशोणमणित्विषां
ततिषु सम्वलिताः खलु भास्वतः ।
दधति निष्फलतां रुचिराजयो
हरिधुरी रिपु रोषचया इव ॥ १४ ॥

रुचिरहीरकराजिविराजिते
शिरसि यस्य महोज्ज्वलतां गते।
समुदितोऽपि विधुर्न विभाव्यते
सकलया कलयापि समन्वितः॥ ५ ॥

नखविदारणकारणतोऽभितो
भयमतीवतरं दधुरध्वकैः।
प्रतिदिनं खलु यत्र मृगेन्द्रतो
मद-युता-दयुतान्यपि दन्तिनाम् ॥ ६ ॥

मधुरकेलिषु यत्र समुल्लस-
द्गुरुपरिश्रमखिन्नहृदां सदा।
अपहृता पवनेन लतागृहे
विलसता-लसता सुरसुभ्रुवाम् ॥ ७ ॥

शशिकराचितकान्तदृशन्नो-
द्भवदमन्दपयःस्नपिता मुहुः।
स्मरति नैव कदाचिदिह स्फुर-
द्वन-लता-नल-तापकथामपि ॥ ८ ॥

शिखिगणेन मनोरमकेकया
मदयता हृदयान्यपि योगिनाम्।
अनुदिनं किल यत्र निषेव्यते
घन-वनी नव-नीरदमेधया ॥ ९ ॥

अयमुदीर्णतरः कनकाचलः
सरससारसनादितयानिशम् ।
वहति मेखलया रुचिमुत्तमां
घन-वितान वितानित शोभया ॥ २० ॥

शिरसि सोल्लसितं वनमालया
हरशिरोदितभूतिविभूषितम् ।
भजति सौख्यमसुं जनताश्रिता
विकसिता कालि तापघनैरपि ॥ २१ ॥

इह समुच्छ्रितशृङ्गपरम्परा
विकटसङ्कटकोटिषु भास्वतः ।
वहति हन्त रथं कथमप्यसौ
चतुरगा तुरगावलिरन्वहम् ॥ २२ ॥

अतिसमुन्नतसानुसमुत्थित-
त्रिदशराजवधूमुखवीक्षणात् ।
इह दिनेऽपि विधूदयशङ्किनो
कमलिनी मलिनो भवति क्षणम् ॥ २३ ॥

मृदुमनोज्ञलतावरमन्दिरे
मलयमारुतसङ्गसुशीतले ।
प्रणयिनीमिह मानविनोदिनीं
सविनयं विनयन्ति विलासिनः ॥ २४ ॥

ललितपल्लविताखिलपादपे
मृदुचलन्मलयानिललालिते ।
सततमत्र समुद्यति माधवे
वलति का लतिकामनु न द्युता ॥ १५ ॥

इममुदारतमं मुदमुत्तमां
विरचयन्तमवाप्य महीधरम् ।
अभिलषन्ति कदापि हृदाप्यहो
न विबुधा विबुधालयसंस्थितिम् ॥ १६ ॥

मधुरगीतिषु कारुविलासव-
चपलबाहुमृणालसमुद्धतैः ।
इह कुरङ्गकुलान्यचलीकृता-
न्यबलया वलयावलिशिञ्जितैः ॥ १७ ॥

स्खलदमन्ददिनेशमणिद्युति-
ज्वलितपंकमवेक्ष्य महीरुहम् ।
इह वहन्ति भयानि पतत्रिणो
भुजग-राज-गरानलशङ्कया ॥ १८ ॥

ननु विलोकय कौतुकमुच्चकै-
रनुसरन् शनकैरिह शौनिकः ।
समधिगत्य वनान्तलतान्तरे
शश एवं शर-बन्धमितोऽद्यति ॥ १९ ॥

मुखरकिङ्किणिकारवबोधित-
चकितचारुविलोलविलोचनः ।
रुचिमयं रथमाकुलमीक्षते
मृगगणो गगनोदरगं रवेः ॥ २० ॥

मरकतोपलकान्तिकराञ्चिते
निवसतां गिरकन्दरसीमनि ।
समुदितोऽपि च घूकपतत्त्रिणां
दिनकरो न करोति विडम्बनाम् ॥ २१ ॥

अतिमनोज्ञतमेन नभस्वता
प्रवरराजवधूरनुरज्यते ।
विरलवंशवनानि शनैः शनै-
र्ध्वनयता नयता-लक-कम्पनम् ॥ २२ ॥

इह लताभवनेकुसमाचिते
शशिशिलातलतल्पनिपादिनी ।
स्वपिति कापि सुखं समया प्रियं
विगत-रागतरा-धर-पल्लवा ॥ २३ ॥

अहह पश्य वयस्य । परस्परं
परिगताः सञ्चितामृतयोऽत्र च ।
कुसुमरत्नचयैः समलङ्कृताः
प्रतिवसन्ति वसन्तमुखाः सदा ॥ २४ ॥

ललितकेलिकलासु कलावती
मधुरहासरसादिभिरुत्सुकैः ।
मुदमुदस्यतीह सदा मदो-
द्धुरतरा रत-रागिणि वल्लभे ॥ २५ ॥

दयितानुगतेन विलासिना
नियत-रङ्ग तरङ्गरता मुहुः ।
सुरगणैम मुदैप निषेव्यते
समदनो मद-नोदितचेतसा ॥ २६ ॥

मृगदृशामपराधपरायणे
प्रियतमे पृथुकोपभरोदितम् ।
अपनयन्ति कलैरिह कोकिलाः
किल रसाल-रसामृत-पायिनः ॥ २७ ॥

विहरदम्भसि पल्वलसन्तति
घण मिह स्थलनिर्मलशालिषु ।
चपलचिल्लकपातविघट्टितं
वि-कुल माकुल-माश्रु निलीयते ॥ २८

तरणितप्ततनुः करशीकरैः
सततमेव शिशुं परिषिञ्चती ।
गजवधूरिह वारिणि दृश्यतां
सकलभा कल भाषि-विषङ्गमे ॥ २८ ॥

मुखरकिङ्किणिकारवबोधित-
चकितचारुविलोलविलोचनः ।
रचिमयं रथमाकुलमीक्षते
मृगगणो गगनोदरगं रवेः ॥ २० ॥

मरकतोपलकान्तिकरम्बिते
निवसतां वरकन्दरसीमनि ।
समुदितोऽपि च घूकपतत्त्रिणां
दिनकरो न करोति विडम्बनाम् ॥ २१ ॥

अतिमनोज्ञतमेन नभस्वता
शबरराजवधूरनुरज्यते ।
विरलवंशवनानि शनैः शनै-
र्ध्वनयता नयता-लक-कम्पनम् ॥ २२ ॥

इह लताभवने कुसुमाचिते
शयिशिलातलतल्पनिपादिनी ।
स्वपिति कापि सुखं समया प्रियं
विगत-रागतरा-धर-पल्लवा ॥ २३ ॥

अहह पश्य वयस्य ! परस्परं
परिगताः सवितास्तनयोऽत्र च ।
कुसुमरत्नचयैः समलङ्कृताः
प्रतिवसन्ति वसन्तमुखाः सदा ॥ २४ ॥

मुकुलिताखिलचूतमहीरुहो
ललितकोकिलकाकलिसङ्कुलः ।
सततमेव वनानि विभूषयन्
सुमधुरा मधुरातनुते लताः ॥ ३५ ॥

प्रतिवनं नवकिंशुकशाखिनां
कुसुमगुच्छशतं परिकाशते ।
विरहखिन्नवधूहृदयानल-
भ्रमकरं मकरन्द-रसाप्लुतम् । ३६ ॥

चलति चारुचलद्दलमाधवी-
विकचपुष्परसासवमत्तया ।
मधुरगीतिरताम्बलियोषया
सम-लया मलयाचलमारुते ॥ ३७ ॥

परिपतन् निपतन् मुहुरुत्पतन्
प्रविकिरन् मधुगन्धि रजः पुरः ।
मधुकरो मृदुगुञ्जनदोलनै-
र्व्रतति-सन्तति-सङ्गमिहायते ॥ ३८ ॥

भ्रमति चारु करोति कलध्वनिं
विशति पत्रचयं द्रुतमञ्चति ।
इति निजप्रियया सह स भ्रर-
न्नविरलं विरम्ङ्कुरुते तरून् । ३९ ॥

परभृतां कलकाकलिगीतिभि-
र्मधुलिहां मधुरैरिह गुञ्जनैः।
विरहिणी समवाप निपीड़ना-
मकरुणैः करुणैरपि पुष्पितैः॥ ४०॥

मधुरसौरभलोभपरिभ्रमद्-
भ्रमरझङ्करणैर्मुखरीकृता।
इह सदैव विभाति लतावली
सकुसुमा कुसुमाकरसङ्गमात्॥ ४१॥

नवविकस्वरनिर्मलमल्लिका-
ललितसौरभसेव्यसमीरणः।
इह सदैव शिरीषरजःकणैः
सुभगमयं ख-मयं कुरुते तपः॥ ४२॥

निविड़पल्लवभाजि लतागृहे
दयितया सह केलिपराः सुराः।
अपि निदाघदिने न विदन्त्यमी
सुख-रताः खरतास्तपनत्विषः॥ ४३॥

तनुतरांशुकचन्दनसेव्यया
दलितपाटलपुष्पविभूषया।
प्रमदयेव ॰॰ ऋतुश्रिसम्पदा
सुमनसां मनसां ततिरच्यते॥ ४४॥

सुरभिधीरसमीरतरङ्गिते
कुवलयावलिलुब्धमधुव्रते ।
इह विलाससुखं दयितासखः
सरसि को रसिको न विगाहते ॥ ४५ ॥

कनककेतककेशरमिश्रितैः
स्फुट-कदम्ब कदम्बक-पांशुभिः ।
युवतयो विलसन्ति घनागमे
समदना मदनाद्रि-शिखण्डिनि ॥ ४६ ॥

मृगपतावपि विश्रुतविक्रमे
मदभरादवलेपपरा द्विपाः ।
अनुभवन्ति सुखं सकरेणवः
सम-करा मकराकुलितेऽम्भसि ॥ ४७ ॥

निविड़पङ्ककदम्बकरम्बिता
जलदजालसमानतनुत्विषः।
विरचयन्ति च दुर्दिनदुर्दृशा-
मिह वराहवरा वनसीमनि ॥ ४८ ॥

विशदकाशविकाशसितांशुका
समदहंसवतंसविभूषिता ।
विकसदब्जमुखीह विलासिनां
रस-मुदे समुदेति शरद्वधूः ॥ ४९ ॥

निवसता नलिनीदलमन्दिरे
मृदुमृणाललतादनमोदिना ।
धवलपंक्तिगणेन निषीयते
सरसता रसता सरसामितः ॥ ५० ॥

सलिलमुत्पलराजिविराजितं
विमदवारिधरावरणं नभः ।
वनभुवो विषमच्छदपुष्पिताः
स शरदा शर-दार्ह्यमितः स्मरः ॥ ५१ ॥

सुजनचित्तनिभाम्बुचयाञ्चिता
मदकलोदक लोलपतत्त्रिणः ।
इह मनो मदयन्ति सरोवराः
कमल-कोमल कोकनदाञ्चिताः ॥ ५२ ॥

मरुवकस्तबकः स्फुरति स्फुटो
वहति शीततरश्च समीरणः ।
मधुरहैमनतोऽत्र गिरो सदा
रसमयः समयः समुदञ्चति ॥ ५३ ॥

लसति लोभलता कुसुमाञ्चिता
निखिलकाननमुद्गतसौरभम् ।
विहरति प्रमदैः प्रमदाशतै-
रलिनि केलि निकेतमिदंचताम् ॥ ५४ ॥

परिगतो जडतां शिशिरोदया-
न्मधुरगीतिरसेन विमोहितः ।
रहसि पाययतीह पिबन् स्वयं
वर-जनो रजनीषु मधु प्रियः ॥ ५५ ॥

विकचकुन्दमरन्दभरालस-
स्तुहिनबिन्दुनिषेवणमांसलः ।
विहरतां मरुतामिह मारुतः
श्रम-हरो मद-रोचनताङ्गतः ॥ ५६ ॥

वलितलोहितलोचनभीषणा
विपुलशृङ्गधरा वनसैरिभाः ।
ददति भीतिमुदीर्णतरामितो
रणरसेण रवेरपि वाजिनाम् ॥ ५७ ॥

अयमुपैति रुचिं धरणीधरो
विलसता निकरेण महीरुहाम् ।
सुरभिशीतसमीरणसङ्गतः
प्रचलता च लतास्तगशालिना ॥ ५८ ॥

कृतकृताशनधूमपरम्परा-
सुरभिताखिलकाननभूमयः ।
इह वसन्ति सदैव तपस्विनो
जप-रताः पर ताप पराङ्मुखाः ॥ ५९ ॥

किरणभिन्नदरीतमसः सदा
वलदमन्दमहौषधिवलयः ।
इह दलप्रचयेन समन्विता-
श्चिरदिनं रदिनं दधते द्रुमः ॥ ६० ॥

विभुरिवातिमनोरमतां गतो
ललितकान्तिफलः कनकाचलः ।
सुमनसामयमातनुतेतरां
चिर-मुदार मुदानुगतं मनः ॥ ६१ ॥

बहुलमत्तमतङ्गजसेवितो
वहति भूधरराजपदं सदा ।
कनकभूभृदसौ परिवीजित-
श्चमर-चामर चारुसमीरणैः ॥ ६२ ॥

तरल-तार लतावरमन्दिरे
सरस सारस-सान्द्रनिनादिते ।
विहरतीह रतीश इवानिशं
सरमणी रमणीयगुणो जनः ॥ ६३ ॥

कामिनीमिह सुचारुहारिणीं
हारिणीं हृदयतापसम्पदाम् ।
ज्ञापयन्त्यनुगता विभावरीं
भाव-रीतिचतुरा विलासिनः ॥ ६४ ॥

स्वेदबिन्दुनिचयालबालका
शाल काननतिरोहितातपे ।
अत्र सञ्चरति रत्नसुन्दरे
सुन्दरेन्दुवदना सुराङ्गना ॥ ६५ ॥

समुज्ज्वलश्रीरयमिन्दुकान्तभृद्
बिभर्त्ति मेरुः शिखरैरनुत्तमैः ।
विलासिनः कुण्डलिनः सुभोगिनो
विलासिनः कुण्डलिनः सुभोगिनः ॥ ६६ ॥

हरिचरणविराजमानमौलिं
बहुवयसानुगतं सुवंशजातम् ।
अमुमपिसुपमानयन्ति लोका
बहुवयसानुगतं सुवंशजातम् ॥ ६७ ॥

इति निगदति पार्थे वीक्ष्य मेरुं सुमेरु-
व्रजरुचिरमुदारं स्फीतमालैस्तमालैः ।
सुररिपुरपि मोदं प्राप दुष्प्रापसर्वै-
र्दधति मुदमुदारां कौतुके को नु के न ॥ ६८ ॥

इति वासुदेवविजये महाकाव्ये सुमेरु-
वर्णनो नाम एकादशः सर्गः ।

# द्वादशः सर्गः ।



अथाद्य मन्त्रनिपुणं धिषणं समुपस्थितम् ।
सर्वं निवेदयामास जिष्णुः कृष्णविचेष्टितम् ॥ १ ॥
श्रुत्वा तद्वचसामोघो वाचिकं कंसविद्विषः ।
विमृश्य क्षणमाचख्यौ संख्यार्थिनमिदं हरिम् ॥ २ ॥
अहोपत ब्रह्मलोकं मयि याते शतक्रतो ।
दुर्नीतमिदमारब्धं त्वयाद्य केन हेतुना ॥ ३ ॥
कामः क्रोधो मदो मानो लोभो हर्षश्च भूभृताम् ।
अन्तरङ्गोऽरिषड्वर्गश्चेदसम्यक् प्रयोजितः ॥ ४ ॥
समयेऽपि समुत्पन्नमुत्साहचितिनाङ्कुरम् ।
आहृत्य सर्वतो रक्षेद्धितातपवाततः ॥ ५ ॥
प्राप्य पुष्टतमं प्रज्ञा-वारिषेकं समन्वितः ।
सहकारिभिरायत्यां स फलायोपकल्पते ॥ ६ ॥
स महान् जायते वीर्यो नियमेनानुवासरम् ।
चिरात् सञ्चीयमानो हि परमाणुर्महीधरः ॥ ७ ॥
सहसैव तु कार्य्याणामारम्भो न प्रशस्यते ।
वंशोऽप्यग्रविसन्तानो नम्यमानो विभिद्यते ॥ ८ ॥
यः सदर्थानुबन्धेन प्रवर्तेतार्थसिद्धये ।
नूनं नीत्यविरोधेन स स्यादर्थस्य भाजनम् ॥ ९ ॥

राजश्रीर्यरितो हेतुर्नयो लोकावनात्मन: ।
लोके जह्नुतनूजाया हिमवानिव सम्मत: ॥ १० ॥
स्वल्पमर्थं पुरस्कृत्य महत्तममिदारुणम् ।
नाश्यते रक्तमिश्रेण जीवनं विषबिन्दुना ॥ ११ ॥
अन्योऽन्यभेदो भ्रातॄणां सुहृदां वा बलान्तक। ।
भवत्यानन्दकन्निन्यं दुर्ह्रियां नात्र संशय: ॥ १२ ॥
क्षोदीयानपि विद्रोहो ज्ञातिभि: कुलनाशकृत् ।
कण: सद्वंशजस्याग्नेर्वनं दग्धुमलं खलु ॥ १३ ॥
उपेन्द्रस्य सुपर्व्वेन्द्र। भ्रातुस्ते याचितं लघु ।
तदाशु पूर्य्यतां तात। सौभ्रात्रं वर्द्धतां चिरात् ॥ १४ ॥
तत्त्वं हितस्य देवेश। श्रूयतामवधानत: ।
प्रदानं पारिजातस्य मह्यं समभिरोचते ॥ १५ ॥
तेनैवमुक्त: सहसा सप्तार्चिरिव सज्वलन् ।
आस्फाल्योरुस्थलं दोष्णा भूयस्तमिदमब्रवीत् ॥ १६ ॥
महोरस्कस्य तस्योर: शिलापट्टनिभं तदा ।
विस्तारं प्रसभं प्राप मौर्वीच्छेदाद्धनुर्यथा ॥ १७ ॥
यावत् सङ्ग्रामयातोऽहं न जितश्चक्रपाणिना ।
पारिजातं न यच्छामि तावद् भो वचसाम्पते। ॥ १८ ॥
मितार्णोव प्रियालापा भृत्या इव विशेषिण: ।
स्वे परे वा प्रतीयन्ते नारयो बहुरूपका: ॥ १९ ॥
उपायै: प्रतिकार्य्यास्ते सहजस्तु न शक्यते ।
प्रतिकर्त्तुं मवर्षद्भिरिरम्मद इवाम्बुदै: ॥ २० ॥

विक्रान्तेन सदा भाव्यं नित्यमर्थानभीप्सता ।
मृगानिव मृगेन्द्रेण राज्ञापि विषयान्तरे ॥ २१ ॥
मां समाह्वयते ज्येष्ठं यवीयान् स रणाङ्गने ।
एवं गतेऽद्य यत् कार्य्यं तद्भवान् वक्तुमर्हति ॥ २२ ॥
अरातेर्दोर्भिकम्प्येयं गर्व्वोत्सिक्तमदो वचः ।
नराणामपि वीराणां चेतःसु गरलायते ॥ २३ ॥
मानार्थं जीव्यते लोके सद्भिरित्युक्तमञ्जसा ।
तदेवं सति नेच्छामि जीवितुं मानवर्जितः ॥ २४ ॥
अधोमुखश्चिन्तयित्वा क्षणमूचेऽथ गीष्पतिः ।
मदनुष्ठीयतां तात ! साम्प्रतं हृदयेप्सितम् ॥ २५ ॥
सदा विनम्रमौर्वोऽपि भुजङ्गः प्रियदर्शनः ।
आहतः फणमुद्धूय हन्तुकामं दशत्यसौ ॥ २६ ॥
अथ प्रयातुकामोऽसौ स्वयमायोधनाङ्गने ।
चकार स्वपनं सम्मूर्च्छितश्रीः पुरन्दरः ॥ २७ ॥
अत्रान्तरे महीयश्रीरुत्साहो मूर्त्तिमानिव ।
जयन्तः सहसागच्छंस्तं प्रणम्येदमब्रवीत् ॥ २८ ॥
अहो ! समरसम्भार-गम्भीरारम्भनिर्भरैः ।
किमद्य स्वर्गिभिः सार्द्धं यादवो योद्धुमिच्छति ॥ २९ ॥
मत् पङ्गुः शृङ्गमुत्तुङ्गं मेरोरारोढुमीहते ।
कूपः संस्पर्द्धतेऽम्भोधिं खद्योतोऽर्कं जिगीषति ॥ ३० ॥
सर्पं सदर्पमङ्घ्रिभ्यां निष्पेष्टुं सोऽद्य वाञ्छति ।
सुप्तसिंहः कथं तेन पादाघातेन बोध्यते ॥ ३१ ॥

इदं गिरीन्द्रदलनं करेण स्थगनं रवेः ।
मृगतृष्णाम्भसि स्नानं यदिन्द्रो जेतुमिष्यते ॥ ३२ ॥
किं योद्धुं यदुभिः सार्धं स्वयं गच्छति वृत्रहा ।
प्रयाशंसति हर्यक्षो विग्रहं हरिणैः किमु ॥ ३३ ॥
ममैव केवलं तेजो ह्यवीराः सोढुमक्षमाः ।
वेगं विहगराजस्य किं रुन्धन्ति सरीसृपाः ॥ ३४ ॥
मद्यानुमन्यतां दासो रिङ्गणाय रणाङ्गने ।
प्राप्स्यतु पराभूतिः शार्ङ्गिणं सङ्गरार्थिनम् ॥ ३५ ॥
क्षम्यतां बालकत्वस्य प्रागल्भ्यं त्रिदिवेश्वर ।
गर्जत्यवेत्य मातङ्गं विवस्थं सिंहशावकः ॥ ३६ ॥
वीर्योर्जितं वचः श्रुत्वा स्वसूनोः पाकशासनः ।
विकसन्मुखपद्मोऽसौ मनसा मम्रशंस तम् ॥ ३७ ॥
अथ देवान् समाहूय स्वयमेव शचीपतिः ।
उवाच श्लक्ष्णया वाचा वाचस्पतिमुखान् मुदा ॥ ३८ ॥
बहुशः प्रार्थ्यमानोऽपि नागच्छत् क्रौञ्चदारणः ।
आयोधनेऽद्य युष्माकं सेनानीः कतमो भवेत् ॥ ३९ ॥
अथेङ्गितज्ञो विज्ञाय शतमन्योर्मनोगतम् ।
जगाद विबुधाचार्यो विबुधैरनुमोदितम् ॥ ४० ॥
सन्ति यद्यपि भूयांसो वीरा निर्जरसैनिके ।
तेषामुज्झितमानौजाः खल्वसौ पाकशासनिः ॥ ४१ ॥
जयन्तं द्विषतो नित्यं जयन्तं मघवन् ! मुदा ।
तदयं द्रष्टुमिच्छामः सैनापत्येऽभिषेचितम् ॥ ४२ ॥

अभिनन्द्य वचस्तेषां सानन्दोऽथ पुरन्दरः।
नन्दनस्याभिषेकार्थमादिदेश बृहस्पतिम् ॥ ४३ ॥
अभिषिक्तस्य तस्याथ खड्गं सारसनोत्तमे।
धूमकेतुर्मिवाधत्त राशिचक्रे सुरेश्वरः ॥ ४४ ॥
वह्निरत्नकिरीटेन तदासौ विस्फुरत्त्विषा।
विरेजे सोऽरविम्बेन हेमकूटगिरी यथा ॥ ४५ ॥
आनर्चुः कुसुमासारैः कुमारं सुरसुभ्रुवः।
जगुर्मङ्गलगीतानि विद्याधरपुरस्त्रियः ॥ ४६ ॥
गभीरमधुरोदारं पीयसन्धारधारवः।
मुदा तदा पयोवाहा वपुः शचिशीकराम् ॥ ४७
सर्वदोषीकरासङ्गी लवङ्गोलासनासनं।
ववौ पुरो जयन्तस्य मन्दं मन्दं समीरणः ॥ ४८ ॥
वीणावेणुमृदङ्गादि नि.स्वनैर्मञ्जुगीतिभिः।
भेरीगभीरनादैश्च तदा सक्षोभितं नभः ॥ ४९ ॥
काले तस्मिन् सुखासीना रत्नसिंहासनोत्तमे।
नोर्म्यमिषेषु पश्यन्तौ नैपुण्यं सुरयोषिताम् ॥ ५० ॥
वैभविन्यासकारिण्या सार्धं सुरसुरश्रिया।
परिहासरसोल्लासिका नितरां मुमुदे शची ॥५१॥ युग्मम् ॥
रागिणीभि. समं नव रागाः सर्वे सविग्रहाः।
आनन्दयन्ति हृदयं भावयन्तो रसान् नव ॥ ५२ ॥
अथ मङ्गलमृदङ्गानां दुन्दुभीनाञ्च भीषणम्।
शुश्राव वलभित्कान्ता सहसा-ध्वनिमुत्थितम् ॥ ५३ ॥

तदासी चामरव्यग्र-हस्तायां पार्श्ववर्त्तिनीम्।
पप्रच्छ चकितेवास्य कारणं वायुसुन्दरीम् ॥ ५४ ॥
सा तु सकरुणं प्राह भीता गद्गदभाषिणी।
वाचिकं वासुदेवस्य तस्याः प्रियचिकीर्षया ॥ ५५ ॥
अथोच्चैः सिंहनादेन वीराणां कम्पितेव सा।
भूय एवाह पौलोमीं देवि हस्तिमितः सखि ! ॥ ५६ ॥
आविरासन् महोत्पाताः सद्यो लोकभयङ्कराः।
ज्योतींषि प्रतयो व्योम्नः पतन्ति वसुधातले ॥ ५७ ॥
योधन्ते च ग्रहैः सार्द्धं ग्रहा नभसि सर्वतः।
सूर्यो निष्प्रभतां यातः पतन्त्युल्काश्च निष्प्रभाः ॥ ५८ ॥
आक्रम्य शैलशृङ्गाणि प्रभाव्यूहैरिरम्मदः।
कठोरघर्घरारावैः पातयन्ति महाशिलाम् ॥ ५९ ॥
संक्षोभिता दिशां नागा नागाश्च धरणीरुधः।
उन्मूलिता महावृक्षा वमन्त्यग्निं महीधराः ॥ ६० ॥
निर्घाताश्च भवन्त्युच्चैर्दिशो दाहेन संयुताः।
प्लावयन्ति जगत् सद्यस्त्सुवेलाः समसिन्धवः ॥ ६१ ॥
प्रज्वलत्यपि नीरेषु वह्निर्दीप्ततरो महान्।
दोधूयते च वसुधा नौर्जलस्येव वायुना ॥ ६२ ॥
वेपते नितरां हन्त हृदयञ्च ममाधुना।
पश्य योद्धुमुपेन्द्रेण महेन्द्रोऽयं प्रसर्पति ॥ ६३ ॥
अहोवत जयन्तोऽपि पितरञ्चानुगच्छति।
इत्युक्ताऽसुधी दीना मौनं सा पर्य्यसेवत ॥ ६४ ॥

अथ स्फुरितबिम्बोष्ठी समुच्छ्वस्य पुलोमजा ।
अवसिक्तेव रोपेण-प्रभाये भीमदर्शना ॥ ६५ ॥
अहो भीरु ! कुतस्तेऽद्य खेदः समुपसर्पति ।
अपि किं न विजानासि प्रभावं सुरविद्विषः ॥ ६६ ॥
शीघ्रं तदेहि मे खड्गं गच्छामि प्रियसन्निधिम् ।
चन्द्रस्य पुरतो नित्यं समुदेति हि रोहिणी ॥ ६७ ॥
दुःखाकरोति मेऽत्यर्थं युष्माकमवमन्नता ।
निशान्ते भुजगाक्रान्ते सुखं निद्राति कः सुधीः ॥ ६८ ॥
इत्युक्तासौ सखीवृन्दैः परितः परिवारिता ।
आययौ प्रियमालिश्य सोरस्योरिव मण्डलैः ॥ ६९ ॥
अथव्यालोलधम्मिल्ला चन्द्रहासलसद्भुजा ।
रणचण्डेव भीमेयं तदालोकि क्षणं जनैः ॥ ७० ॥
मातः ! प्रमोद पुत्रस्ते प्रणतश्चरणान्तिके ।
अनुज्ञां याचते प्रीत्या प्रयाणाय रणाङ्गने ॥ ७१ ॥
इत्युक्तवन्तं तं देवी दोर्भ्यामाश्लिष्य सादरम् ।
अङ्के निधाय वात्सल्यादचुचुम्ब तनयाननम् ॥ ७२ ॥ युग्मम् ॥
परिचुम्ब्यमयन्त्याश्च तदा तन्मुखमण्डलम् ।
बभौ गोधाकरे बिम्बे न्यस्तं पद्ममिव स्फुटम् ॥ ७३ ॥
तस्याः सुस्राव नेत्राभ्यां वारि खेदप्रसूद्भवम् ।
कूर्मद्वयप्रभागाभ्यामजस्त्रमिव जलं यथा ॥ ७४ ॥
पयाङ्गुलिभ्यामालम्ब्य चिबुकं तस्य वल्लभा ।
पर्यचुम्बीव तत्तेजो जगाद स्फुरिताधरम् ॥ ७५ ॥

वत्स! गच्छसि सङ्ग्रामं पन्थानः सन्तु ते शुभाः।
कच्चिद्द्रक्ष्यामि भूयस्त्वां जयश्रीसुपश्यान्वितम् ॥ ७६ ॥
येन कल्याणिना पुत्र! अरवः परिमर्दिताः।
आत्मानं मन्यते तेन प्रसूः रत्नप्रसूरिति ॥ ७७ ॥
व्याजहाराथ जम्भारिं जृम्भयन्तीव तद्दृशम्।
गन्तुमिच्छाम्यहं नाथ! सङ्गरं रणरङ्गिणी ॥ ७८ ॥
नाथ चित्तं सहस्राक्ष! यद्रङ्गं याति भामिनी।
गजयूथाक्रमे सिंहो भवति प्रिययान्वितः ॥ ७९ ॥
दयितां ते परित्यज्य गन्तुं नार्हसि वृत्रहन्!।
अस्पृते पादलग्ना किं प्रततिर्मत्तदन्तिना ॥ ८० ॥
त्वां विनाद्य बलध्वान्ते स्वर्गेऽहं स्थातुमक्षमा।
श्रूयते सौरतेजोभिर्दीप्यते शशिनः कला ॥ ८१ ॥
आकर्ण्योर्जस्वलां वाचं प्रियायाः प्रियदर्शनः।
मोचयन् मेघनिर्घोषं बभाषे मेघवाहनः ॥ ८२ ॥
ओजस्विन्यानया वाचा प्रीतोऽस्मि नितरां तव।
मरुभूमौ यथा पान्थः प्राप्तया सरिता क्वचित् ॥ ८३ ॥
विरम्यतामितो देवि! व्यवसायान्मृणालिनी।
युताऽपि कण्टकै रोद्धुं किं शक्नुयान् मतङ्गजम् ॥ ८४ ॥
एक एव विधाताहं महीं निर्यादवां क्षणात्।
त्रिःसप्तवारान् निःक्षत्रां भार्गवो ह्यकरोदिमाम् ॥ ८५ ॥
वल्लभस्येदृशीं वाणीं श्रुत्वा मर्माणि पीड़िता।
वीणेव छिन्नतन्त्रीव मूकतां प्राप भामिनी ॥ ८६ ॥

अथ संक्षेपेण हृत्क्षोभं नियम्य दयिताज्ञया ।
पादाब्जं ब्रह्मणो द्रष्टुं तल्लोकं प्रति सागमत् ॥ ८७ ॥
तदा हैमरथस्तस्या वाहाभ्यां सुतरां बभौ ।
दोधूयमानपक्षाभ्यां व्योम्नि विष्णुरथो यथा ॥ ८८ ॥
सापश्यत् कोटिशस्तत्र ग्रहाणां मण्डलं पथि ।
घूर्णमाने स्वकक्षासु कन्दुकौघं विधेरिव ॥ ८९ ॥
उत्पाद्य मधुरं ध्वानमपूर्वं श्रुतिरञ्जनम् ।
विभोर्यशांसि तद्व्याजाद् गायन्नित्यं रसादिव ॥ ९० ॥
रम्ये सौधाकरे बिम्बे क्षणं विश्रम्य सा मुदा ।
अतीत्य ज्योतिषां लोकं ब्रह्मलोकं समासदत् ॥ ९१ ॥
प्रयातायामथैन्द्राख्यां महेन्द्रो महसा ज्वलन् ।
दिदेश शिखरे मेरोः प्रयाणाय सुधान्धसः ॥ ९२ ॥
समीक्ष्य समरोद्योगमपर्वणि सुपर्वणाम् ।
असुरत्रासंसम्मूढा मुमुहुः सुरसुभ्रुवः ॥ ९३ ॥
सम्भाविविरहव्याधि-मुग्धा यदमरस्त्रियः ।
प्रभूतां सुरसद्मानां तदेवासीदमङ्गलम् ॥ ९४ ॥
अथैरावतमुत्क्षिप्तमारोहति बलद्विषि ।
द्रुतमारुरुहुर्देवाः स्वानि यानानि सर्वतः ॥ ९५ ॥
तर्जयन् जगतीमुच्चैर्हेषितैर्गजगर्जितैः ।
प्रतस्थे समरारम्भ-दम्भो दम्भोलिभृत् स्वयम् ॥ ९६ ॥
उन्नतध्वजिनीनादैर्ढक्कारैर्धनुषां तथा ।
नादयन्तो दिशः सर्वाः सुपर्वाणः प्रतस्थिरे ॥ ९७ ॥

उच्चैःश्रवसमारूढं जयन्तं परिलक्ष्य ते।
मेनिरे यशसा जिष्णोः प्रतापो मूर्त्तिमानिति ॥ ९८ ॥
ढक्कानां विकटध्वानैर्वंशैस्र घनघोषणैः।
भेरीगम्भीरनिर्ह्रादैः संक्षोभितमभून्नभः ॥ ९९ ॥
मत्तामणिगणोद्योत-विद्योतितविशाङ्कटः।
वाहिनीं रञ्जयामासुः कुञ्जरा मदमेदुराः ॥ १०० ॥
दन्तिदन्तसमोद्दाम-बाहुदण्डविमण्डिताः।
जग्मुः समरसंरम्भ-दम्भपूर्णाः पदातयः ॥ १०१ ॥
केचिदारुह्य मातङ्गान् प्रोतुङ्गान् मददुर्मदान्।
तदानीं विन्ध्यशृङ्गस्था हर्य्यक्षा इव रेजिरे ॥ १०२ ॥
नर्त्तयन्तस्तुरङ्गालीः प्रासोल्लासितपाणयः।
अश्ववारवराश्चेरुर्दम्भा इव शरीरिणः ॥ १०३ ॥
तदा भग्नाग्रलग्नाभिः केतुमालाभिरञ्चितम्।
दिदीपे नितरां व्योम धूमकेतुगणैरिव ॥ १०४ ॥
संक्षुब्धसिन्धुकल्लोलैस्तिमिङ्गिल इवाधुना।
अन्वीयमानस्त्रिदशैर्विरेजे जम्भसूदनः ॥ १०५ ॥
धूमधूम्रस्फुरन्नोः कुर्वन् परितो हरितोऽनिशम्।
उद्धतः प्रययौ योद्धुं प्रज्वलन् ज्वलनः स्वयम् ॥ १०६ ॥
महोद्दण्डेन दण्डेन ब्रह्माण्डं खण्डयन्निव।
जगाम शमनः शीघ्रमरातिशमनाशया ॥ १०७ ॥
नवीनाम्बुदसङ्काशा महोदीर्णास्त्रपाणयः।
सघृणा राक्षसा जग्मुर्योद्धुमुद्धतचेतसः ॥ १०८ ॥

कलयन् प्रलयाशङ्कामकालेऽपि जलोत्करैः।
अगमत् सङ्गराभ्भोधौ पाशी पाययितुं द्विषः ॥ १०९ ॥
वेपयन् प्रबलैर्वेगैः सर्वतः कुलपर्वतान्।
आन्दोलयामास लोकानञ्जसैव प्रभञ्जनः ॥ ११० ॥
उद्दामसमरारम्भ-दम्भसम्भारसम्भृतः।
गदापाणिरुदीर्णश्रीर्यक्षेशोऽपि क्षणाद् ययौ ॥ १११ ॥
कण्ठहालाहलज्वाला-जटालैर्लोचनानलैः।
रुद्रा विद्रावयामासुर्द्विषामाशु प्रसन्नताम् ॥ ११२ ॥
आजगाम न यच्छेषः प्रयात्यपि दिवस्पतौ।
तेनैव प्राप स प्रौढां पीडां भूरिभरान्वितः ॥ ११३ ॥
रुचिभिः क्रोधपूर्णानामचिरेण स्वरोचिषाम्।
कोटिसूर्य्योर्जितज्योतिर्विराजितमभून्नभः ॥ ११४ ॥
संरावेण महोदग्र वरूथिन्या बलद्विषः।
भुवनानि महोत्पात-वातेनेव चकम्पिरे ॥ ११५ ॥
वैमानिकविमानौघ ज्योतिर्मण्डलमण्डिते।
व्योम्नि व्याजृम्भमाणोऽपि न दिदीपे दिवाकरः ॥ ११६ ॥
यावदाकर्णयन्नादमुत्पश्यति वियन्मनः।
तावदेव सुराधीश ध्वजिनी मेदिनीमगात् ॥ ११७ ॥
अथ देवगणोद्दाम वेगवायुपराहतः।
चकम्पे शिखरव्यूहो मेरोरश्वत्थपत्रवत् ॥ ११८ ॥
धाराणां क्षुभितैर्भूयः कठोरैः करिबृंहितैः।
वसुधा बहुधा कम्पमाबभार भयादिव ॥ ११९ ॥

अथ शक्रवल्लीद्भूत-धूलिभिर्धूसरच्छविः।
रविस्तत्क्षालनायेव न्यमाङ्क्षीत् पयसां निधौ ॥१२०॥
दीर्घपादपशीर्षेषु शृङ्गेषु च महीभृताम्।
दग्धकालवशादाम चञ्चांशोः शतधाभवत् ॥ १२१ ॥
क्रन्दन् लुठंश्च चक्राङ्गः प्रियाविरहकातरः।
दृष्ट्या करुणयाद्राक्षीदपराद्रिगतं मुहुः ॥ १२२ ॥
अकुण्ठभुजवीर्यस्य शनकैरमरेशितुः।
उत्कण्ठया समं माघ गाढतां तमसान्ततिः ॥ १२३ ॥

तदा निजाङ्कं विनिधाय मेरोः
शृङ्गेऽपरं शृङ्गमिवाशु रूढम्।
अलब्धदृष्टिर्गगनस्य पश्यन्
विचिन्तयामास शचीं शचीशः ॥ १२४ ॥

अथ विविधशिताखाखादधानो निकामं
रुचिरकनकशैलाभ्यासमासाद्य मद्यः।
मृगयुरिव मृगेन्द्रं मङ्क्षु काङ्क्षन् मुकुन्दं
सुरपतिरपि कृच्छ्राद् यामिनीं तामनैषीत् ॥ १२५ ॥

इति वासुदेवविजये महाकाव्ये जयन्ताभिषेको
नाम द्वादशः सर्गः।

---

# त्रयोदशः सर्गः ।



अथोद्धृतैर्दैवपतेर्वचोभि-
र्निपीयमानैर्विहगेश्वरेण ।
समीरवेगैरिव रोहिताश्वो
हरिस्तदानीमधिकं दिदीपे ॥ १ ॥

अखर्वगर्वं वचनं बलारे-
र्यथा यथासौ स्फुटमाशशंस ।
तथा तथा कोपकषायितश्री-
र्ददौ दृशौ चक्रधरः स्वचक्रे ॥ २ ॥

अगाधसत्त्वोऽपि यदद्य सद्यो
जगाम धैर्यच्युतिमच्युतोऽसौ ।
इतोदितेनाद्रिभिदस्तदस्मिन्
निदर्शनं वाडववानुदन्वान् ॥ ३ ॥

अथोपरोषारुणभीषणश्री-
र्ललाटपट्टभ्रुकुटीविभङ्गः ।
स पाञ्चजन्यध्वनिना प्रयातुं
बलानुजः स्वं बलमादिदेश ॥ ४ ॥

मरन्दचक्रादिव भृङ्गसङ्घा-
स्त्विनेवनेवादिव वह्निभासः ।
अपासधीयादिव भङ्गमाला
गिरेर्निरीयुर्सुरजिद्ध्वजिन्यः ॥ ५ ॥

हृदयवेगान् बलदर्पभाज-
स्तुरङ्गमानधनि नर्त्तयन्तः ।
सुवर्णसन्नाहभृतोऽश्ववाराः
भासोल्लसन्मापितलाः प्रजग्मुः ॥ ६ ॥

आयोधनारम्भहृतोरुदम्भाः
सम्भावयन्तो विजितं महेन्द्रम् ।
योराः परामर्दनवर्द्धमान-
क्रोधा द्रुदा मोदमुदारमोयुः ॥ ७ ॥

प्रचण्डतुण्डाः समुदग्रशुण्डाः
स्रवन्मदा रौक्मकुथावनद्धाः ।
जग्मुर्जवाज्जङ्गमशैलकल्पाः
कल्पान्तपाथोदनिभा मदेभाः ॥ ८ ॥

वर्षैःक्वणत्काञ्चनकिङ्किणीक-
मुच्छूनचक्राक्रमितारिचक्रम् ।
अभेदसत्त्वाहत्युद्युयमानो
रथाद्गपाणो रथमारुरोह ॥ ९ ॥

प्रस्थानकं वैरिमहीपतीनां
प्रयान्तमुद्वीक्ष्य मुरद्विषन्तम् ।
सर्वे सुपर्वेशमहेशकल्पा-
स्तमन्वधावन् बलफाल्गुनाद्याः ॥ १० ॥

महारथैस्तैरभितो व्रजद्भिः
स्फूर्जत्त्विषांशुच्छविरेष रोषात् ।
ग्रहैः समन्ताद् रभसाद् भ्रमद्भि-
स्सदाहि भास्वानिव भासते स्म ॥ ११ ॥

धनाभिलाषीव वदान्यमुख्यै-
रुच्चैःश्रवोऽश्वोऽग्रमपेक्षमाणः ।
प्रतिष्ठदाक्रष्टसुरारिमार्गो-
ऽनुगम्यमानः स्वबलैर्मुरारिः ॥ १२ ॥

अथोत्कटैर्माधवसैनिकाना-
मुद्दण्डकोदण्डरवैरतीव ।
फणीव नादैर्मरुतव्रजाना-
मुदीर्णशौर्यो हरिरास रोषम् ॥ १३ ॥

किमत्र चित्रं यदवाप मन्युं
सेनानिनादैः शतमन्युचित्तम् ।
न किं हठात् क्षोभयति क्षितिभं
विधाय धाराहतिमन्तरभ्रा ॥ १४ ॥

प्रवेपमानस्य रुषा तदास्य
नासाबिलाच्छ्वासभरैर्निरीये ।
वज्रग्रहात् प्राक् परिकम्पतेऽद्रि-
र्निर्याति धूमप्रकरस्य दर्थ्याः ॥ १५ ॥

उत्साहवातैः प्रथितः क्रुधाग्नि-
र्ममौ शरीरे नहि हव्यवतोः ।
तीक्ष्णार्चिरोचिःप्रचयच्छलेन
यद्वाविरासन्निव तत्स्फुलिङ्गाः ॥ १६ ॥

चमूंषि वज्री युगपन्निवेश्य
क्षुब्धोऽप्यथेन्द्रः क्षणमास तूष्णीम् ।
प्रचण्डझञ्झोत्पतनाद्धि पूर्वं
प्रभञ्जनः स्थैर्यमुपैति किञ्चित् ॥ १७ ॥

तदामरेशो रणवेशधारी
महद्रुमन्युच्छिदयैरदर्शि ।
ज्वलन्निवाग्निर्वनराजिकल्पं
कंसारिसैन्यं सहसा दिधक्षन् ॥ १८ ॥

अथार्पयन् नेत्रसहस्रपातै-
र्दिगङ्गने शोणिमकान्तिपूरम् ।
विडम्बयन्नम्बुदमन्द्रघोषान्
सुरान् समाहूय जगाद वज्री ॥ १९ ॥

युष्माकमन्तर्यदपि प्रवीराः ।
सदा समुत्साहभरेण पूर्णम् ।
तथास्तु वाचां प्रचयो मदीयो
वायुर्यथोद्दीपनहेतुरग्नेः ॥ २० ॥

वयं न मृत्योर्वशगाः कदापि
तथा जरास्मासु पदं न कर्त्री ।
सुपर्वणां गर्वभरोऽवमितो
जयश्रियो वत्मसुदीचतेऽद्य ॥ २१ ॥

स्वातन्त्र्यरत्नस्य दृढप्रतिज्ञैः
सन्तानकल्पैः खलु जन्मभूमेः ।
उत्सृज्यते यैस्तृणवन्मुदात्मा
ध्रुवं जगत्याममरास्त एव ॥ २२ ॥

मनुष्ययोनापि वयं न जातु
स्वतन्त्रतास्वर्गसुखं जहीमः ।
यतः प्रवीराः सततं परेषा-
मधीनतां मृत्युमिव स्मरन्ति ॥ २३

स्वातन्त्र्यरत्नं द्विषतां पदान्ते
विन्यस्य लौल्यात्तनुजीवितस्य ।
प्राणन्ति ये दास्यपरा नु तेषां
जीवन्मृतास्ते नितरां वराकाः ॥ २४

अभीष्टलाभाय रिपोः पुरस्तात्
यैर्मन्यते क्रन्दितमेव शस्त्रम्।
मनस्विताहीनहृदः कदापि
न ते पुमांसः पुरुषप्रतीकाः॥ २५॥

आनम्य मौर्वं द्विषतो भयेन
सभावमात्मं ये परिदर्शयन्ति।
कुर्व्वन्ति तच्छिन्नवच सर्व्वं
पुच्छेन हीनाः पशवस्त एव॥ २६॥

भीरुत्वमेति स्थिरतां यदिष्टे
चित्ते तदन्यच्च पदं कुतोऽस्य।
कृतास्पदः सन्ततमेव चन्द्रे
नालक्ष्यते आत्वपि भानुमद्भः॥ २७॥

दग्धोदरार्थं परिचुम्ब्य भूमिं
प्रीणन्ति शत्रून् निरपत्रपा ये।
अधोनताग्रद्वु लवद्धकण्ठान्
तान् सारमेयान् मनुते मनस्वी॥ २८॥

अर्थस्य भेदं गमिताः प्रलोभा-
द्विपक्षपक्षं खलु ये श्रयन्ति।
तान् पामरान् क्षुद्रतरांश्च पापान्
वेक्लीयते धारयितुं धरित्री॥ २९॥

अतो नु गर्वात् प्रणिधिर्मुरारेः
प्रगल्भमना जगदे मयैनम् ।
गिरीन्द्रकुञ्जे गजगर्जितानि
निशम्य किं जातु बिभेति सिंहः ॥ २० ॥

तदुच्यतां मद्वचनादुपेन्द्रो
विपक्षनिक्षिप्तशरैश्चिरेण ।
नाकारि नाकाधिपदास्यमूनां
पक्षीन्द्र । वक्षोव्रणराजिराजी ॥ २१ ॥

परस्परं प्रेमगुणेन बद्धा-
स्त्यक्ष्यन्ति नैक्यं त्रिदशाः कदापि ।
नष्टैकयोगात् सिकतासहस्रं
घातेन किं भूधरतामुपैति ॥ २२ ॥

स्वातन्त्र्यपीयूषरतिं निकृत्य
प्रवीरधर्मस्य विमथ्य पद्भ्याम् ।
न शिक्षिताः प्रत्युपदान्स्वै-
रत्याप्यहन् धारयितुं सुरौघाः ॥ २३ ॥

अरातिभीत्या जननीमिव स्वां
सन्त्यज्य पूज्यां खलु जन्मभूमिम् ।
अभिन्नचित्तानपि बालबन्धून्
ईदृक्ष जीवन्ति किमद्य देवाः ॥ २४ ॥

हृदापि यो योधयितुं सुरौघान्
महौजसः कल्पयति प्रयाणम् ।
ध्रुवं प्रसुप्तस्य हरेः सटालो-
माक्रष्टुकामः स तमभ्युपैति ॥ ३५ ॥

शक्तोऽस्मि देवान् प्रसभं विजेतुं
स्वप्नेऽपि यश्चिन्तयतीति मूढः ।
करोति संख्यां परमाणुराशे-
र्व्योमापि दोर्भ्यां परिमायते सः ॥ ३६ ॥

कृतापराधोऽपि न गोपडिम्भः
क्रुधः परं स्थानम वज्रपाणेः ।
इत्येव बुद्ध्या समुपेक्षितः किं
प्रगल्भतां प्राप पुराद्रिधारी ॥ ३७ ॥

आलिङ्ग्य गाढं सुरवाहिनीं ता
स्वद्वारि निद्रातु हरिस्तदद्य ।
शचीः पताकां ननु जन्मभूमौ
स्वप्नेऽपि कश्चिद्विबुधाः सहन्ते ॥ ३८ ॥

पुराङ्गनानामपहृत्य वासः
प्रचार्य विभूर्व्रजबालवृन्दैः ।
अनार्यजुष्टं चरितञ्च तन्वन्
न लज्जतेऽसौ सुरपुष्पभीषन् ॥ ३८ ॥

तथापि वात्सल्यवशंवदोऽहं
प्रदित्सुरस्मि त्रिदिवप्रसूनम् ।
स चेदुपेन्द्रस्तरणी ममाद्य
सभां प्रतीच्छेत् परिचुम्ब्य मूर्द्धा ॥ ४० ॥

एवंविधैरुन्नतरैर्वचोभि-
र्वलाहवं स्वेव महस्विनस्तान् ।
दिवस्पतिः प्रौढभुजप्रतापः
समापितारिः समरं जगाम ॥ ४१ ॥

अथ प्रवृद्धोद्धतयुद्धरङ्गो
प्रतापतुङ्गोकृतबाहुवीर्य्यः ।
सुपर्व्वसैन्यैः परितः परीतः
पुरन्दरः प्राप समीकभूमिम् ॥ ४२ ॥

सयात् पतन्तावतिवीर्य्यवन्तौ
तरङ्गसङ्घाविव सागरस्य ।
संध्याप्तुतां सङ्गरभूमिभागा-
नुपेन्द्रदैत्येन्द्रचमूसमूहौ ॥ ४३ ॥

अनन्तकल्पान्तसमीरसङ्गात्
समुत्पतन्तावपि वारिवाहौ ।
वेगेन सङ्घर्षणमाप्य लब्धा
वितेनतुस्तावतिमन्द्रनादान् ॥ ४४ ॥

यशो हिमांशुप्रतिमं समन्ता-
दसुव्ययेनापि समीहमानाः ।
परस्परस्पर्द्धितया तदानी-
मस्त्रप्रहारान् विदधुः प्रवीराः ॥ ४५ ॥

समित्समारम्भहतोरुदर्पाः
सम्भावयन्तो विजयं स्वकीयम् ।
निपातयामासुरपारसाराः
प्रहारधाराभिररातिवीरान् ॥ ४६ ॥

निजप्रभोर्नाम समुदिरन्तो
रणोत्सन्तोषपराश्च योधाः ।
मिथः शरानुग्रतरान् वितेनु-
र्वोरिप्रवाहानिव वारिवाहाः ॥ ४७ ॥

ललाटबद्धभ्रुकुटीतरङ्गाः
सदर्पमुत्पत्य पदातिसङ्घाः ।
न्यपातयंस्तीक्ष्णकृपाणघातैः
प्रत्ययदन्तावलदन्तकुन्तान् ॥ ४८ ॥

पदातिपादोत्थितधूलिजाल-
महान्धकारे भ्रमति त्रिलोकीम् ।
कलम्पसङ्घर्षभवैः स्फुलिङ्गैः
खद्योतपुञ्जैरिव तत्र रेजे ॥ ४९ ॥

मुहुर्मुहुः स्वामिसमर्प्यमाण-
सम्मानयानप्रणयादिकानाम् ।
विश्रांतुमानृण्यमिवेहमानैः
पास्पर्द्धमानैर्युयुधेऽथ योधैः ॥ ५० ॥

स्ततोऽस्त्रजालाहतदिग्भ्रमन्तैः
स्खलद्भिरंह्रासिमिलीमुखौघैः ।
उदग्रवेगैरिव सर्पसार्थै-
र्विकीर्य्यमाणं वियदाबभासे ॥ ५१ ॥

निषूदिताधोरणयोर्विपक्षै-
र्द्विपेन्द्रयोरुन्मदयोस्तदानीम् ।
प्रचण्डसंग्रामविलोकनोत्कै-
रकारि वीरैः क्षणमाजिमान्द्यम् ॥ ५२ ॥

अथ प्रगल्भोर्ज्जितवीर्य्यभाजां
प्राणान् हरन्तः सरसानुवेलम् ।
तदान्तकस्येव कटाक्षपाता
प्रक्षोभधारा विशिखा निपेतुः ॥ ५३ ॥

विभिन्नवक्षाः क्षतजोक्षिताङ्गो
रेजे तुरङ्गोपरि कोऽपि वीरः ।
रणश्रिया गाढतरानुरागं
संभाजितः शोणमणिस्रजेव ॥ ५४ ॥

समीरवेगाविव वावदूक-
वचःप्रपञ्चाविव चाव्यवस्थौ।
पुनः पुनर्भङ्गजयौ तदानो-
मवापतुर्यादवदेवदक्षौ ॥ ५५ ॥

सञ्छिद्यमानेषु निजाङ्ककेषु
विच्छिद्यमानेष्वपि वाहनेषु।
द्विपप्रहारस्फुरदुग्ररोषै-
रकारि वीरैर्न मनोऽपि दूनम् ॥ ५६ ॥

उदस्थयन्तयलचामराणि
चर्माणि चारूणि पदातिसार्थाः।
उत्थापयामासुरसिप्रहारैः
कणाः क्षणानोः करिराजदन्तात् ॥ ५७ ॥

तदा महावीरगणैर्विभिन्न-
महीयकुम्भाः समराजिरेषु।
युगान्तवातैरिव पात्यमाना
महीधरा दन्तिवरा निपेतुः ॥ ५८ ॥

वीरप्रहारोत्करमूर्च्छितानां
महागजानां रुधिरप्रवाहाः।
मनःशिलारञ्जितनिर्झराणा-
मवापुरर्थं रविमाहवेषु ॥ ५९ ॥

विभूतिभारैरिव रोहिताश्वो
मदैरुदीर्णैरिव सद्गुणौघः ।
बभार वीतप्रभतां नृवीरै-
र्विनिर्ज्जितो निर्ज्जरवीरवर्गः ॥ ६० ॥

विलोकयन्तः स्वबलं दिगीशा
विद्रावितं यादववाहिनीभिः ।
विस्तारयन्तः सितशस्त्रधारां
रणाजिरं रोषपराः परीयुः ॥ ६१ ॥

उषर्बुधः क्रोधभरेण पूर्णः
समुज्ज्वलन्तीं तनुमादधानः ।
कल्पान्तलक्ष्मीं कलयन्नकाले
ज्वालाजटालः स्फुटमाविरासीत् ॥ ६२ ॥

प्रकम्पयन्तं श्वसितेन शैला-
नुदग्रशृङ्गं चलभानुबिम्बम् ।
अधिष्ठितः कासरमुग्ररूपं
ययौ यमो योद्धुमथोन्नतश्रीः ॥ ६३ ॥

धृतायुधैर्विग्रहवद्भिरुग्रै-
रम्भोधिभिर्द्राक् परितः परीतः ।
जगाम संग्राममहीमहीन-
तेजा जलानामधिपः सदर्पम् ॥ ६४ ॥

महीधराणामपि शृङ्गसङ्घान्
प्रेङ्खोलयन् वेगभरैरतीव ।
उद्वेलयन् वारिधिवारिपूरान्
प्रभञ्जनो रङ्गरयः प्रतस्थे ॥ ९५ ॥

पुष्पाभिधं कामगमं विमान-
मारुह्य यक्षैरनुगम्यमानः ।
दधन्महासुपसमारुणश्री-
र्धनाधिनाथो रभसादयासीत् ॥ ९६ ॥

विभ्राजमानः स्वमहोभिरुच्चै-
रुच्चैःश्रवःपृष्ठगतो गरिष्ठः ।
अनन्तवीर्यः प्रययौ जयन्तो
विस्तारयंस्तोषभरं मघोनः ॥ ९७ ॥

सुपर्वणां दुर्विषहैर्महोभि-
रापूर्यमाणेषु हरिन्मुखेषु ।
बलं बलाद्यैरपि पाल्यमानं
विभीषितप्रायमभून्मुरारेः ॥ ९८ ॥

उच्छृङ्खलं तत्र समीक्षमाणा
महीयमानाधिकदर्पभाजः ।
बलादयः प्रौढभुजप्रतापाः
सङ्ग्रामसीमानमथाभिजग्मुः ॥ ९९ ॥

कालं हली पाशकरं किरीटी
गदोऽनिलं सात्यकिराश्रयाश्रम्।
मुदा जयन्तं भुजवीर्यवन्तं
जगाम कामं समराभिरामः॥ ७० ॥

बिभ्रद्गदामुग्रमदारुणाक्षः
क्षौमोद्धतो युद्धमहीमुपेतः।
विलोकितो निर्भरभीति लोकै-
र्यमो यमस्यापि स सीरपाणिः॥ ७१ ॥

तदान्तकं सन्ततबाहुशौर्यः
शौर्येण निर्जित्य जगज्ज भूयः।
करीव नलिनीमथ कामपालो
विलोलयामास बलारिसेनाम्॥ ७२ ॥

अथागतः प्रौढबलैरुपेतो
रोषान्वितः पाशधितुं विपक्षान्।
निरुद्धवेगः प्रवरैर्पार्थै-
रकारि पाशी खलु फाल्गुनेन॥ ७३ ॥

विदेव दारिद्र्यभरैरतीव
तुषारपूरैरिव पङ्कजश्रीः।
पार्थेषुपातैः सलिलाधिपस्य
चमूप्रभा निष्प्रभतामवाप॥ ७४ ॥

मदीयबाणव्रजदीर्य्यमाणो
यदाप मान्द्यं समरे समीरः ।
वसन्नपि श्रीमति चन्दनाद्रौ
जहाति नाद्यापि तदेव नूनम् ॥ ७५ ॥

अनल्पकल्पान्तहुताशकल्पः
समुज्ज्वलज्ज्वालजटालदेहः ।
दहन् दरप्रायमरातिसैन्यं
वह्निर्ययौ सात्यकिमत्युदग्रम् ॥ ७६ ॥

विनिर्दहन्तं ध्वजिनीं मुरारेः
स्पृशन्तमुच्छूनशिखाभिरभ्रम् ।
वैश्वानरं वारुणबाणवर्षैः
शिनिप्रवीरः शमयाम्बभूव ॥ ७७ ॥

अवाकिरन् पवितरङ्गसङ्घान्
ययौ जयन्तो जलधिप्रकाशः ।
अधृष्यतेजाः खलु तान् प्रसह्य
बभौ तदा सद्य इवाशु कार्ष्णिः ॥ ७८ ॥

तूणे न बाणग्रहणे न योगे
नाकर्षणे नैव विमोचने न ।
अलक्षि शिक्षावशतस्तदानीं
तयोः करः क्वापि युधि प्रवीरैः ॥ ७९ ॥

महेन्द्रसूनुस्तरसा पृषत्कै-
र्विव्याध वाहानथ शम्बरारेः ।
छित्वा सहणञ्च धनुस्तदानीं
महोर्जितश्री रभसाज्जगर्ज्ज ॥ ८० ॥

अमृष्यमाणोऽस्य सदर्पभावां
फणीव पादाहतिमेव रोषात् ।
गदामुपादाय ललाटपट्टे
जयन्तवाहस्य जघान कामः ॥ ८१ ॥

तुरङ्गराजस्तदुरुप्रहार-
मासाद्य सद्यो विकलीकृताङ्गः ।
विषादयन्नस्य मनो नितान्तं
नदार्त्तनादान् सुचिरं चकार ॥ ८२ ॥

आलम्ब्य रश्मीनतियत्नभाजा
निवारितोऽपीन्द्रसुतेन भूयः ।
उवाह वाहः स्थिरतां न, किन्तु
चलाशयः श्राम्यति सान्त्वनेन ॥ ८३ ॥

महोग्रवेगैर्घनवाणवर्षे-
र्यदुप्रवीरैरभिहन्यमाना ।
अकर्णधारेव तरिस्तदासौ
बभ्राम दैवध्वजिनी समन्तात् ॥ ८४ ॥

हयोत्तरङ्गोऽथ महोग्रकुम्भि-
कुम्भीरभीमः समरप्रदेशः।
सम्पूर्यमाणो रुधिरापगाभि-
रवाप कल्पान्तपयोधिलक्ष्मीम् ॥ ८५ ॥

दन्तीन्द्रदन्तार्पितकर्णभूषाः
कृतान्त्रहाराः क्षतजाङ्गरागाः।
मदोन्मदाः शोणितसीधुधारां
कपालपात्रैरपिबन् पिशाचाः ॥ ८६ ॥

नवं नवं मांसमशीरमुच्चै-
रादाय दर्पात् परिचर्वयन्तः।
उत्तालतालोत्तरलं विलग्नाः
पिशाचरडा ननृतुः समन्तात् ॥ ८७ ॥

नक्तञ्चरौघोऽपिबदवमदपि ग्रस्तकुन्तः प्रकुन्तः
क्वव्यं मव्यं रटहोत्वा स नदति मुदितो मत्तवेतालबालः
चिक्रीडावोडमुच्चै रुधिरमधुमदात् पूतना भूतमाङ्गो
योगिन्यो मांसमेदःप्रमुदितमनसस्तुष्टुवुः शूरशक्तिम् ॥८८

गिरारवैर्भूरितरैर्गभीरै-
रमोटनादैरपि कोणपानाम्।
विदीर्यमाणेव भयेन संख्ये
मही महाक्रन्दितमाततान। ८९ ॥

कश्चिद् विमानमधिरुह्य सुराङ्गनाभिः
स्वीयं वपुः समरभूमि समीक्षमाणः।
आनन्दतुन्दिलमनाः स्फुटमाशशंसे
धीरान्वये निजजनुर्जननान्तरेऽपि ॥ ९० ॥

मार्तण्डः कुमुदोत्करानिव गुणग्रामानिवोच्चैर्मदः
कालः प्राणिगणानिवाशनिमहाघातोऽद्रिकूटानिव।
विद्वेषः प्रणयानिवोच्छ्रितशिखो वह्निर्वनान्तानिव
भीमानुग्रपराक्रमः सुमनसो द्रागाममर्द स्मरः ॥ ९१ ॥

इति वासुदेवविजये महाकाव्ये सङ्कुलयुद्ध-
वर्णनो नाम त्रयोदशः सर्गः।

---

## चतुर्दशः सर्गः ।



देवसैन्यमथ दैन्यमुपेतं
वीक्ष्य रोषभरभङ्गुरितभ्रूः ।
व्याकिरन्निशितसायकधारा-
माजगाम समरं सुरराजः ॥ १ ॥

क्रोधपूर्णहृदयस्य बलारे-
र्लोललोचनसमूहमयूखैः ।
उच्छलच्छिखिशिखाभिरिवोच्चैः
शोणिमानमवहन् घनमालाः ॥ २ ॥

ऐरावतोऽन्तिरधिरूढकरीन्द्रः
सङ्गरे सुरपतिः स विरेजे ।
मेरुमूर्ध्नि पृथुरोचिरुदञ्चो
भानुमानिव तपर्त्तुदिनेषु ॥ ३ ॥

वीक्ष्य कोपकलितैर्नरवीरै-
र्मर्द्यमानमपि दैवतसैन्यम् ।
अर्पयन्निजकरं शरपुङ्खे
सम्मते स्म बलवृत्रनिहन्ता ॥ ४ ॥

गण्डमण्डलगलन्मदधारा-
निर्झरेषु दनुजारिगजेषु ।
जङ्गमाचलधियेव तदानीं
संमुमोच मघवान् निजमस्त्रम् ॥ ५ ॥

कुण्डलीकृतशरासनो मनो-
जायदुग्रतरकोपपावकः ।
क्षीरनीरनिधिमन्थमन्दरः
सञ्चचार परितः पुरन्दरः ॥ ६ ॥

दुरन्तमदमहोल्बणं रुधिरनीरपूरच्छटा-
जटालतलसङ्कुलं भटतिमिङ्गिलैराकुलम् ।
प्रमथ्य समरार्णवं बलमधर्षि जम्भद्विषा
विधाय मदमन्थरं मथनमन्दरं सिन्धुरम् ॥ ७ ॥

केसरीव करजैः करिसार्थान्
सायकैर्युधि निहत्य सुवीरान् ।
मौक्तिकैरिव यशोभिरुदारै-
राततान विशदां हरिरुर्वीम् ॥ ८ ॥

भज्यमानहृदयत्रिकपृष्ठा
भिन्ननेत्रकरकर्णललाटाः ।
पीडिता मघवता शरजालै-
र्जीवितानि मुमुचुर्युधि वीराः ॥ ९ ॥

शूलेन विद्धः कुपितेन तेन
सञ्चूर्ण्यमाणोऽपि पदा गजेन
सहैव संरम्भमहोग्रदर्पै-
स्तत्याज कश्चित् तृणवत् तदासून् ॥ १० ॥

बाहुभिर्निपतितैस्तरुणाना-
मुल्लसन्मणिमरीचिविचित्रैः ।
रेजिरे रणभुवः सुखसुप्तै-
रत्नमूर्द्धभिरिवोरगराजैः ॥ ११ ॥

हलद्विषद्बाणविभिद्यमान-
कंसारिसेनागणशोणितानाम् ।
सहस्रशः सङ्गरसीम्नि धारा
नदानुकाराः सस्रुः समन्तात् ॥ १२ ॥

भयाकुलं स्वं बलमीक्षमाणो
मानोन्नतो दर्पहरो रिपूणाम् ।
सदा प्रसन्नाननपुण्डरीको
जगाम योद्धुं जगतामधीशः ॥ १३ ॥

शार्ङ्गिणा बलसखेन रंहसा
दूरतोऽपि रुरुधे द्विषद्बलम् ।
सिन्धुनोच्छ्वसितवारिणा सरि-
द्वारिचक्रमिव धावदुद्धतम् ॥ १४ ॥

धन्वन्धनुर्जयधुरन्धरमादधानो
दानोद्धतद्विरदराजसहस्रदर्पः।
सन्नाहवान् समरसीम्नि विभुस्तदानीं
वीरो रसः स्फुट इव त्रिदशैरदर्शि ॥ १५ ॥

मत्तवारणघटाभिराकुलं
वाजिराजिखुरखातभूतलम्।
चामरध्वजरथौघसङ्कुलं
भीषणत्वमगमद्रणस्थलम् ॥ १६ ॥

निपातयन्तो निशितासिघातै-
ररातिवीरानवहेलयैव।
अलातचक्रप्रतिमाः समन्तात्
तुरङ्गिणः सङ्गरसीम्नि चेरुः ॥ १७ ॥

कालाभ्रपुञ्जनिभः खेटराजेः
समुत्थश्च वह्निः कृपाणप्रहारात्।
मदोदीर्णसैन्यस्तनश्चापि वह्नि
व्यधोक्षुभ्यताब्धिस्तदा वाडवेन ॥ १८ ॥

विभिद्यमानाः समरे सरोषं
शरैः सुतीक्ष्णैर्मधुसूदनेन।
वज्राभिघातैरिव शैलकूटा
भटा मघोनो न्यपतन् समन्तात् ॥ १९ ॥

विडौजसि ज्यायसि पूजनीये
वैरं तनोत्येव इतोव हेतोः ।
अह्नोदयाद्ञ्जनसन्निभैव
विभा विभाति स्म हरेः कृपाणे ॥ २० ॥

मिथादृढतया तदा सुररिपोरालोकितः कैरपि
ज्यावन्धे न शरः शरे न च करस्तचापि न स्यन्दनम् ।
किन्त्वेतद्दृटमानवाणनिकराधारैर्ययौ दृक्पथं
न द्यौ नौ सविता नवा वसुमती नापि दिग्मण्डलम् ॥२१॥

देवास्तदा स्फुरितरोषभरारुणाभि
र्दृग्भिर्दिशामरुणतामवतारयन्तः ।
नीहारनीरदनिकरैरिव भूधरेन्द्रं
भूयो सुरारिमकिरन्नुरुमल्लसारैः ॥ २२ ॥

जवादहंपूर्व्वतया प्रधावतां
सुपर्व्वणां वाजिखुराभिघातजैः ।
समुच्चदुद्दाढरजोभिरूर्ज्जिते-
रकारि काशां ककुभां न धूसता ॥ २३ ॥

विमिश्रिताः केशवसैन्यसञ्चयैः
समं महोत्साहभरेण निर्ज्जराः ।
तदाहि धूमोत्करमध्यपातिनः
स्फुटाः स्फुलिङ्गा इव मुहु रेजिरे ॥ २४ ॥

सगर्व्वमुरुविक्रमे सपदि देववीरव्रजे
विमुञ्चति समन्ततो निशितशस्त्रजालं मुहुः।
अदर्शि न दिवाकरो नच रराज दिङ्मण्डलं
व्यलोकि न नभःस्थलं न गतिमाप्तवान् मारुतः ॥२५॥

शरान्धकारे ग्रसति त्रिलोकी-
मादित्यबिम्बे च विलीयमाने।
सन्तापयामास भृशं सपत्नान्
वायव्यमस्त्रं विसृजन्नुपेन्द्रः॥ २६ ॥

उन्मूलयन् गुरुतरानपि भूरुहौघान्
प्रेङ्खोलयन्नपि शिरांसि कुलाचलानाम्।
निर्द्धूय तच्चिदयमुक्तमहास्त्रवर्षं
विश्वं प्रकम्पितमधात् सहसा नभस्वान् ॥ २७ ॥

निजबलमवलोक्य भज्यमानं
पृथुतरकोपविदह्यमानचेताः।
अथ समरमहीमहीनवीर्य्यो
विभुमभि दैवतनायकः प्रतस्थे॥ २८ ॥

बिभ्रत्कोदण्डमुग्रं कुपितयममहोद्दण्डदण्डायमानैः
काण्डैर्मातैः प्रचण्डैः समिति विचरतां खण्डयन् मुण्डखण्डान्।
क्रोधज्वालाजटालां नवनदयमतीमुद्धतामादधानो
मार्त्तण्डो महेन्द्रः शशिरिव निखिलैर्वीरलोकैर्व्यलोकि॥२८।

जाताभ्रनिस्वनिशतं विलसत्तडिज्जं
जैत्रं धनुर्दधतमेव तदा महोच्चैः ।
आसारसारशरजालमुचं पुरस्तात्
कृष्णं नवीनजलदं बलभिद् ददर्श ॥ २० ॥

सिंहो यथान्यं प्रतिसिंहमारा-
न्निरीक्ष्य गर्जत्युपजातमन्युः ।
तथा महेन्द्रोऽयमुपेन्द्रमुच्चैः
धर्षंश्च सन्धुचितवैरवह्निः ॥ २१ ॥

सदर्पकन्दर्पबलादिजेतुं
स्वर्गौकसः काङ्क्षसि रे मुकुन्द । ।
अहोवताङ्काय पिपीलिकानां
पक्षोद्गमः स्यान्मरणाय नूनम् ॥ २२ ॥

नर्व्यद्य चक्राहितसर्वशक्ति-
र्दैत्यस्त्वदीयो निकषाश्मभातिः ।
प्रयातु शाणत्वमकुण्ठितस्य
स्फुरत्क्षमानोस्य मदस्य राशेः ॥ २३ ॥

संक्षोभिताप्यग्निनिभैस्तदुक्तै-
र्न प्राप शौरेः प्रकृतिर्विकारम् ।
यद्वाद्रिमोत्क्षिप्तशिलोच्चयं भू-
स्तूर्णीं समाकर्षति गूढमक्ता ॥ २४ ॥

अथ दुःसहरोषतो रुषा
सदयःकीलकलापकल्पिताम् ।
मुमुचे हत इत्युदीरयन्
स शतघ्नीमुदिताय विद्विषे ॥ २५ ॥

अर्द्धचन्द्रवदनैः शिलीमुखै-
स्तां विभज्य कदलीमिव चण्डात् ।
आशया सह सुधाभुजो द्विषः
केशवोऽवनितले न्यपातयत् ॥ २६ ॥

मुहुर्मर्दयन्तः कृपाणाभिघाते-
र्झणज्झणन्निनादैः सुनासीरसेनाम् ।
नृवीरा मदान्धाः सदा प्रोचुरुच्चै-
ररेरे हरे । खड्गं देहि देहि ॥ २७ ॥

अथ प्रेर्यमाणो मघोनानुवेलं
तथा माधवैरावणः सङ्गरेषु ।
प्रमुद्दण्डशुण्डाप्रचण्डप्रहारै-
स्तोमोग्रसारान् ममर्दारिवीरान् ॥ २८ ॥

गणैः क्रुधा तत्प्रभिन्नैस्तदान्यैः
समिद्धानि युद्धाङ्गने साधनानि ।
वनानीव कल्पान्तवाताभिघाता-
द्गलोहगिरीन्द्रैर्विचूर्णीकृतानि ॥ २९ ॥

स तान् वीक्ष्य संख्योद्धतान् पङ्कजाक्षो
बलक्षोभमत्युद्भटञ्च स्वपक्षे ।
समुल्लासफुल्लाननश्रीर्गदाभृत्
करे कार्मुकं द्रागधिज्यश्चकार ॥ ४० ॥

जवादापतन्तं चमुं मर्दयन्तं
मदोद्दामदर्पोद्धनन्तं गजेन्द्रम् ।
बलद्दानदम्भे महोच्चूनकुम्भे
शरैकप्रघातैर्मुरारिर्जघान ॥ ४१ ॥

अपारसारेण शरेण शौरे-
र्विद्धोऽथ मर्मस्थय वर्मयुक्ते ।
मुहुर्मुहुर्मौलिमशो विधुन्वन्
स कान्दिशीको हरिणा व्यपेधि ॥ ४२ ॥

माध्यर्थं गतवति वारणे समन्ता-
दत्यन्तप्रसरदनल्पकोपपूर्णः ।
सन्नद्धैः सुरकटकैः समं समस्ते-
रस्त्राणि चिद्गपतिर्विभो मुमोच ॥ ४३ ॥

सन्तन्वतोम्लोघमहास्त्रवर्ष-
मुदीर्णदर्पाद्वदतोः पुरस्तात् ।
युगान्तमेघप्रभयोस्तदानीं
युद्धं तयोरेव तयोरिवाभूत् ॥ ४४ ॥

इत्थं तयोर्वीर्य्यवतोः समन्तात्
प्रवर्त्तमानेषु महाहवेषु ।
व्यलोकि लोकैर्विततेऽस्त्रवर्षे
न द्यौ रविर्नैव न वा धरित्री ॥ ४५ ॥

अथ पवनधनेशरुद्ररक्षो
यमशशिपाशिविशालशस्त्रजाले ।
ज्वलति निजबलं बलानुजन्मा
स्मितपरिपूर्णमुखो दधार शार्ङ्गम् ॥ ४६ ॥

शरैः प्रतीकारपरैस्तदानीं
निरस्य तद्दैवतमस्त्रमित्थम् ।
सम्मोहयन्निर्भरमुग्रतेजाः
सम्मोहयामास सुरान् सुरारिः ॥ ४७ ॥

सम्मुग्धेषु सुरेषु शौरिविशिखैः सैन्ये च विद्राविते
मान्यर्थ्यं गमिते मतङ्गजपतौ गर्ज्जत्सु शत्रुष्वपि ।
धैर्यात्तं तरसा विधातुमधिकक्रोधोद्धतस्तत्क्षणा-
दस्त्रं जर्जरितारिपञ्जरमधात् पाणौ पतिर्नाकिनाम् ॥ ४८ ॥

स्फूर्जज्ज्वालाजटालैः सपदि दश दिशो धूमधूम्रा वितन्वन्
कुर्व्वन् गर्व्वोद्धतानां समिति विपरतां मानसं मानशून्यम् ।
तीव्रारावैस्त्रिलोकीं झटिति बधिरतामापयन्नुग्ररूपो-
दम्भोलिर्दम्भकान्ते त्रिदशपतिकरे मोहदोषाद्दिदीपे ॥ ४९ ॥

कल्पान्तसन्ततपयोधरघोरघोष-
मुद्दीक्ष्य वज्रममरेश्वकरे मुकुन्दः।
उद्दामदानवदवानलभुज्विहान-
ज्योतिर्वितानघनमाशु दधार चक्रम् ॥ ५० ॥

निजैर्ज्वालाजालैः कवलयति दिक्चक्रमुदिते
महाचक्रे चञ्चत्खरकिरणकोटिप्रतिनिधौ।
चकम्पे भ्रम्येव त्रिभुवनमभूदाभ्रमरणं
स्मआगरद स्मारी सुरहरजयश्रीपरिकरः ॥ ५१ ॥

उद्भ्रामयन् पाणितलेन यावत्
स्वचक्रमुन्मुञ्चति चक्रपाणिः।
शिवाय शक्रस्य तु तावदेव
प्रद्युम्नायी व्योमपथं समोयुः ॥ ५२ ॥

सुरा नमन्मौलिविरुदारचेताः
कृताञ्जलिः स्रोतव्रतं तदानीम्।
स्वरेण धीरेण हरेः पुरस्तात्
प्रपञ्चयामास चिरं विरिञ्चिः ॥ ५३ ॥

यस्मादयं जगदिदं समुदेति सद्यो
यद् योगिनो विगतरागतया भजन्ते।
वेदान्तवेद्यमनवद्यसुखात्मकं यं
तद्धाम सविदघनस्वितमाश्रयामः ॥ ५४ ॥

तैव चरणाब्जमरन्दं
वन्दे यद्बिन्दुमात्रमापीय ।
जीवा भवन्ति नूनं
जन्मजराव्याधिपरिहीनाः ॥ ५५ ॥

मुक्ताफलमिव करतल-
कलितं निखिलमपि यः पश्यति जगत् ।
सोऽयं जयति तमाल-
द्युतिरपि मे विशदयंश्चेतः ॥ ५६ ॥

विलसतु मनसि सदा मे
किमपि विचित्रं मयाद्भुतं ज्योतिः ।
मलिनयति दुर्ज्जनमुखं
सुजनं रञ्जयति यन्नियतम् ॥ ५७ ॥

सर्व्वश्रुतिपारगता
अपि न खलु विदन्ति यस्य महिमानम् ।
तमिममनन्तममेयं
सत्यज्ञानाश्रयं वन्दे ॥ ५८ ॥

जयति जगदेकमङ्गल-
मपहतनिःशेषदुरितघनतिमिरम् ।
रविबिम्बमिव यथास्थित-
वस्तुविकाशमिदं श्यामलमहः ॥ ५९ ॥

करुणावरुणालयाय नित्यं
दलदिन्दीवरदामसुन्दराय ।
अनवद्यगुणैकमन्दिराय
प्रणतत्राणविधायिने नमस्ते ॥ ६० ॥

निहत्य दैत्यान् गुरुभारभङ्गुरां
महीमहीनां लघुमाशु कुर्वते ।
कृतावताराय मुकुन्दमहात्मने
घनेन्द्रनीलद्युतये नमो नमः ॥ ६१ ॥

क्रोधं विभो ! संहर संहराशु
पुरन्दरे मन्दमतौ मदान्धे ।
जरापराभूततनौ मुकुन्द !
तवायमास्तां मयि च प्रसादः ॥ ६२ ॥

स्तुतिमतपरिपदं भक्तिनम्रस्य धातु-
र्गदितमिदमुदारं गौरवादाकलय्य ।
हरिरतिकरुणोऽसौ सर्वहारांश्च चक्रे
हृदुदयति न वक्रं मानिनामानतेषु ॥ ६३ ॥

इति वासुदेवविजये महाकाव्ये चतुर्दश्याख्यो
नाम चतुर्दशः सर्गः ।

---

# पञ्चदश. सर्गः ।



अथ स्तुतो वेदविदा विरिञ्चिना
कृतापराधेऽपि पुरन्दरे चिरम् ।
मुमोच रोषं मुरजिन्महामनाः
क्षमा हि कीर्त्तिः प्रणतेषु मानिनाम् ॥ १ ॥

विमोचयन् भीतिभराद् दिवस्पतिं
स्मितद्युतिद्योतितसञ्चराञ्चलः ।
तदा विधातारमपारविक्रमो
विनोदयामास गिरा मुरान्तकः ॥ २ ॥

त्वया सरोजासन ! हेलयैव किं
विधातुमिन्द्रस्य शतं न शक्यते ।
तथापि यन्मोचयसीममुखके-
रिह त्वदीया करुणैव कारणम् ॥ ३ ॥

तपोभिरुच्चैः फलितं ममाधुना
कृपासनाथस्य तवानुकम्पया ।
अहो महायोगिगणैरबोधितं
महत्त्वबोधाममिदं यदीच्यते ॥ ४ ॥

मुदा विनिर्म्मासि जगत्त्रयोमिमां
दधासि विद्रावयसि च्चणादपि ।
जगत्प्रसूतेर्महिमानमद्भुतं
न वेद वेदोऽपि तवेश ! तत्त्वतः ॥ ५ ॥

त्विदूरिता दैवतनाथदुर्गतिः
कृतार्थिता मे च विलोचनद्वयी ।
इतः परं देव ! निदेशयाशु मां
निदेशकारी करवाणि किं तव ॥ ६ ॥

मुदा तदावादि हरिर्विरिञ्चिना
न नाथ ! वाच्यं भवतेति कर्हिचित् ।
विलोकितं तावकपादपङ्कजं
किमन्यदस्ति स्पृहणीयमीश ! नः ॥ ७ ॥

इदन्तु देव ! प्रणतोऽहमर्थये
भयात् सुरश्यो भवता धृतक्रतुः ।
वयञ्च चमत्करणाकरम्वितै-
र्विलोकनीया ललितैर्दृगञ्चलैः ॥ ८ ॥

सुरैः समन्तादभिवादितस्तदा
मुदा मुकुन्देन च भक्तितोऽर्चितः ।
विलोचनासेचनकस्तिरोदधे
विरिञ्चिपीयूषमयूखमण्डलः ॥ ९ ॥

अथ द्विपन्निर्भरभीतिवर्द्धने
निवारिते कंसजिता निजायुधे।
हतत्विषां नाकनिवासिनां तदा
विजृम्भितं चेतसि जीविताशया ॥ १० ॥

स्मितावलोकैरमृतद्रवोपमै-
र्विनोदयन् मानसमाशु नाकिनाम्।
रणाङ्गने वारिदधीरनिस्वनः
प्रशान्तमूर्त्तिः स्फुटमाह माधवः ॥ ११ ॥

शुभाः शिखावन्त इव द्विजन्मनां
सदैव नः पूज्यतमाः सुरोत्तमाः।
भवात्तु मान्येष्वपि मेऽद्य दुर्नयो
दधाति किं दग्धविधिर्न देहिनाम् ॥ १२ ॥

फलार्थिभिर्निर्भरभक्तिभावितैः
समर्च्यते यत्प्रतिमापि मानवैः।
मयोद्धतं युद्धमकारि तैरहो
मदोन्मदान् मूढधियो धिगस्तु नः ॥ १३ ॥

अधीश्वितारो जगतां दिवौकसः।
क्षमध्वमेतन्मम बालचापलम्।
विधेर्विधानादिरुणद्धि कस्य वा
न मानसं मोहमहातमस्ततिः ॥ १४ ॥

भयं न मत्तो भवतां भविष्यति
व्रजन्तु सर्व्वे समरच्च मुञ्चत ।
सुरद्रुमः किन्तु कियद्दिनं मयि
प्रदीयताच्चेत् करुणा भवादृशाम् ॥ १५ ॥

ततः समुच्छिन्नयो नयोज्ज्वलः
समुज्ज्वलश्रीरभिवाद्य वासवम् ।
समाललम्बे खलु मौनमञ्जसा
न साधुवृत्ता बहुभाषिणः क्वचित् ॥ १६ ॥

दयावता शार्ङ्गभृता निवेदितं
वचः सुधाधारतुषारसुन्दरम् ।
द्रुमान् तपर्त्ताविव वारिवर्षणं
विनोदयामास तदा दिवौकसः ॥ १७ ॥

कृतापराधेऽपि रणे हतायुधे
सुधाभुजां राजनि निर्ज्जिते बलात् ।
हरेर्दयोच्छ्वासि निशम्य भाषितं
द्रुतं न केषां द्रवतामगान्मनः ॥ १८ ॥

अथ त्रपासम्भ्रमपूर्णमानसो
यदा न शेके गदितुं शतक्रतुः ।
उवाच वाचस्पतिराशु केशवं
तदिङ्गितज्ञो गुणगुम्फिता गिरः ॥ १९

कृतापराधं प्रसरत्त्रपाभरो
हरिर्न शक्नोति मुकुन्द ! भाषितुम् ।
अथास्य यच्चेतसि चिन्तितं वच-
स्तदीहितज्ञेन मया निवेद्यते ॥ २० ॥

विदन्ति यं वेदविदो न तत्त्वतो
वदन्ति सांख्याः प्रकृतिश्च पूरुषम् ।
अनन्तकल्याणगुणः सनातनः
प्रयातु स ज्ञानपथं कथं मम ॥ २१ ॥

वधाय देवद्विषतां परः पुमान्
कृतावतारः क्षितिमण्डले भवान् ।
विदन्ति मोहान्धधियस्तु मादृशा
न तावकं देव ! महत्त्वमद्भुतम् ॥ २२ ॥

कृतोऽपराधः सुमहान् मयत्नता
क्षमा च तस्मिन् भवता प्रकाशिता ।
नतेषु न क्वापि तवापचीयते
स्फुरत्कृपापूरकरम्बितं मनः ॥ २३ ॥

सुरद्रुमो हन्त तवैव नीयतां
यथेच्छमिन्दीवरसुन्दर ! त्वया ।
तदस्ति किं वस्तु जगत्त्रयीगतं
त्वमीश्वरो यस्य जनैर्न मन्यसे ॥ २४ ॥

अमुष्मसत्सद्मदनदमानसः
प्रलिप्सतेऽह्नाय यदेष वासवः ।
निवेद्यते तच्च मयेश ! साम्प्रतं
विधेयमेतद्भवता दयावता ॥ २५ ॥

निजापराधान् परया सपर्यया
विभो ! विनेतुं विनतः शतक्रतुः ।
भवन्तमन्तर्व्यथया प्रणोदितः
समीहते नेतुमहो स्वमालयम् ॥ २६ ॥

भवत्पदाम्भोजरजोभिरञ्चितैः
कुशस्थलीवातिपवित्रताश्रयः ।
प्रसन्नचित्ते त्वयि माधव ! द्रुतं
सुराधिराजस्य पुरी भविष्यति ॥ २७ ॥

सुराङ्गना मङ्गलपाणयः स्थिताः
शिवोऽयमावाति शनैः समीरणः ।
अकुण्ठकण्ठोरवविक्रमाधुना
त्वया शुनासीरपुरी निरीक्ष्यताम् ॥ २८

त्वपानतः सम्मदवाष्पधारया
निरुद्धकण्ठो विकसन्मुखाम्बुजः ।
उदारमौनेन गुरोरुदीरितं
चिरस्वकारानुमतं शचीपतिः ॥ २९ ॥

निशम्य गीर्वाणगुरोर्गरीयसीं
गिरं तदानन्दमयीं नयोज्ज्वलः ।
मनः सुराणां हसितामृतद्रवैः
प्रमोदयन् मुग्धमवोचदच्युतः ॥ ३० ॥

वयं गुरो ! निर्भरभक्तिभाविताः
सदा सुपर्वेशनिदेशकारिणः ।
असौ यदाज्ञापयति प्रसन्नधी-
स्तदाशु धार्यं शिरसैव मादृशैः ॥ ३१ ॥

इति ब्रुवाणे यदुनन्दने तदा
मुदा परीतः परया पुरन्दरः ।
सिषेच पीयूषरसेन सर्वतो
रणस्थलीं मूर्च्छितजीवहेतवे ॥ ३२ ॥

दवाग्निकल्पैर्विविधास्त्रसञ्चयै-
र्विशोषितानामुरुवीरवीरुधाम् ।
नवाम्बुवर्षैरिव निर्भरं घनै-
र्नवीनताकारि तदामृतद्रवैः ॥ ३३ ॥

प्रबोधिताश्चाल्पतलादिवोत्थिता
मुदा तदानीमतिपूर्णमानसाः ।
सुधाभिषिक्ताः परितो रणाङ्गनात्
परासवः सत्वरमुत्थिता बभुः ॥ ३४ ॥

हतैः पुरा प्रापि वरामराङ्गना
ततः सुधासेककृता नवीनता।
अतः सुखावाप्तिविरोधि तत् क्षणं
क्षणोन्मदा जीवनमेव मेनिरे॥ ३५॥

तदा सुधासेचनजातजीवितं
विलोकयंस्तद् बलं बलात्मकः।
पुरीमलङ्कर्तुमसौ तडिन्मुखै-
र्निदेशयामास सुपर्वशिल्पिनम्॥ ३६॥

पुरन्दरो दारितदैत्यसम्पदा
मुदा मुकुन्देन यियासुरात्मनः।
पुरीसुरौकारितचारुकारवां
क्षणात् समारुक्षदथो रथोत्तमम्॥ ३७॥

सुखोपविष्टाः स्फुरदुग्ररोचिषः
सुरेन्द्रदत्तासु विमानराजिषु।
प्रयान्तमिन्दीवरसुन्दरं हरिं
तदानुजग्मुर्यदवः समं सुरैः॥ ३८॥

तनूप्रभोद्भासितदिग्विहायसो
विराजमाना यदुवीरराजयः।
तदा तदालोकयतां समन्ततो
वितेनिरे चेतसि भास्करभ्रमान्॥ ३९॥

ततस्तरङ्गिण्य इवेशमम्भसां
श्रियः समृद्धा इव नीतिशालिनम् ।
विचित्रदृश्यं सुरराजपत्तनं
सुरारिसेना विविशुः ससम्भ्रमम् ॥ ४० ॥

निरीक्ष्य तां नेत्रमनोविनोदिनीं
सुराधिराजस्य पुरीं गरीयसीम् ।
ननन्दुरानन्दसुधापयोनिधौ
निमज्जमाना इव माधवानुगाः ॥ ४१ ॥

विलोलिताभिर्मृदुना नभस्वता
महाट्टहोद्दामदुकूलवल्लिभिः ।
समाजुहावाशु मृदङ्गनादिनी
करारविन्दैरिव सा रमापतिम् ॥ ४२ ॥

सहाग्रजोऽपश्यदतोऽमरावती-
मतिस्फुटस्फाटिकतुङ्गगोपुराम् ।
दुरासदान्तःपरिखापरिष्कृतां
प्रकीर्णधान्याङ्कुरलाजसङ्कुलाम् ॥ ४३ ॥

मृगेन्द्रयुग्मप्रतिमूर्त्तिभासुरैः
सुवर्णदण्डध्वजराजिराजितैः ।
सहस्रशः कृत्रिमतोरणैरहो
महोत्सवैः सायनैरिवाञ्चिताम् ॥ ४४ ॥

समुल्लसत्पुष्पप्रवालपल्लव-
स्फुरत्फलक्ष्मारुहवीथिमञ्जुलाम् ।
समन्ततो गन्धजलोक्षितावना-
मलङ्कृतां पूर्णघटैश्च पंक्तिशः ॥ ४५ ॥ विशेषकम् ॥

अमन्दमन्दारसुचारुसौरभैः
सुरापगाशीतलशीकरैरपि ।
शनैः शनैर्धूनितपल्लवोऽनिलो
विनोदयामास मनो मधुद्विषः ॥ ४६ ॥

विरोचमानः स्मितमुग्धधामभि-
र्घनस्तनस्यन्दनमध्यमास्थितः ।
हरिः सुराधीशपुरीनिवासिभि-
र्मुदा तदालोकि शशीव शारदः ॥ ४७ ॥

समुद्यदानन्दमनोप्रमादितैः
सुराङ्गनानामपि वल्गुगीतिभिः ।
चिराच्चिदानन्दमयस्य दर्शना-
दमन्दमानन्दमिवाप सा पुरी ॥ ४८ ॥

अथ त्रिलोकीतिलकोऽभवद्द्रुतो
प्रयाति पूर्णेन्दुमुखे सुरद्विषि ।
समन्ततो देवपुरौकसामभू-
न्मनस्तदालोककौतुकोत्सुकम् ॥ ४९ ॥

दिदृक्षया सम्मिलितैरितस्ततो
विलोकितो वर्त्मनि कैश्चिदच्युतः ।
अचिन्त्यचिन्तामणिलाभसम्भव-
प्रमोदसम्भारमपारमापिपत् ॥ ५० ॥

हरेर्मुखालोकनलोलचेतसां
विनिर्यतीनां भवनात्सुभ्रुवाम् ।
निमेषशून्यैर्नयनैर्नभःस्थलं
रराज राजीवमयं समन्ततः ॥ ५१ ॥

निरीक्षितुं नीरदसुन्दरद्युतिं
द्रुतं व्रजन्ती शिखिनीव सादरम् ।
नितम्बबिम्बच्युतचन्द्रकावलीं
चिराय काचिन्न विवेद कौतुकात् ॥ ५२ ॥

परं सरन्त्या रभसान्मृगीदृशो
विलोकितुं केशवमम्बुजेक्षणम् ।
उदारहारच्युतमौक्तिकोत्करैः
सखीजनः पद्धतिमन्वमायत ॥ ५३ ॥

निपीतपीताम्बरकान्तिकौमुदी-
सुधारसाः सम्मदपूर्णमानसाः ।
विलासवत्यः प्रतिवर्त्म यादवै-
र्विलोकिताश्चित्रगता इव क्षणम् ॥ ५४ ॥

समादरात् तस्य पुरस्तथोपरि
प्रकीर्य कर्पूररजः सकुङ्कुमम् ।
महोन्नतं काश्चन हर्म्यमाश्रिता
निनिन्दुरौन्नत्यमिहेक्षितुं विभुम् ॥ ५५ ॥

घनानुरागाः स्खलदम्बरस्रजो
विपर्ययेण त्वरया परिष्कृताः ।
मुकुन्दमानन्दमयं विलोचनै-
श्चिरं पिबन्त्योऽपि न तृप्तिमाययुः ॥ ५६ ॥

समासनीलच्छविरस्त्वलोचनो
विनोदयन् मानसमेष पश्यताम् ।
यदि क्षणं हन्त निरीक्ष्यते तदा
सुधा सुधापानकदर्थनायतः ॥ ५७ ॥

इति ब्रुवाणा मृदुहासकैतवा-
न्मुखारविन्देऽस्य मरन्दसुन्दरे ।
निमज्जयामासुरुदीर्णसौहृदाः
समं दृशा नैचमशुनतत्रजम् ॥ ५८ ॥ युग्मम्

न सा सुपर्वेशपुरे नितम्बिनी
यया न दृष्टो हरिरस्य सादरम् ।
न तादृशः कोऽपि पुमान् स दृश्यते
न यस्तदा मोदमुदारमाश्नात् ॥ ५९ ॥

सभाजितोऽसौ सुरसुन्दरीगणै-
र्विलोचनोदारसरोजराजिभिः।
ददर्श वैदूर्य्यमणीन्द्रसुन्दरं
पुरो मुकुन्दोऽथ महेन्द्रमन्दिरम्॥ ६०॥

सभागृहद्वारमुपेत्य सम्भ्रमात्
तुरङ्गमेन्द्रादवरुह्य वासविः।
नियोजयन् भृत्यगणानितस्ततः
प्रकाशयामास स्वयं विनीतताम्॥ ६१॥

पुरःसरः प्रीतिपवित्रमानसो
विनीतमूर्त्तिर्मघवान् सुरद्विषम्।
करावलम्बैरवतार्य्य यानतः
प्रवेशयामास निवेशमात्मनः॥ ६२॥

महेन्द्रगोपारुणमञ्जुराङ्कवैः
प्रवेशमार्गः पिहितोऽस्य सद्मनः।
हिरण्यवाहस्य निवातनिश्चलं
नवाम्बुपूरं त्रपयन् व्यराजत॥ ६३॥

स्वयं सुराणामधिपेन यत्नतः
सुवर्णसिंहासनसन्निवेशिताः।
विरेजिरे संसदि यादवास्तदा
मखेषु वेदीमिलिता हुताग्नयः॥ ६४॥

नमस्कृता सादरमद्य सत्यया
चिरं परिष्वज्य सुरेन्द्रसुन्दरी ।
समं सखीभिः परया मुदान्विता
निनाय तामाशु निजं निकेतनम् ॥ ६५ ॥

पुलोमजाऽऽसनसङ्गतां तदा
चिराय सत्राजितराजनन्दिनीम् ।
सभाजयामासुरुदारमानसाः
सुरस्त्रियः कुङ्कुमचन्दनादिभिः ॥ ६६ ॥

नागरत्नमथ भङ्गुरभ्रुवः
केशवीथिसविधे न्यवीविशत् ।
सानुरागसुपयोऽलिकास्थले
बालसूरमिव स्वरसुन्दरी ॥ ६७ ॥

सूनरत्नमिचयेन गुम्फितां
मञ्जुगुञ्जदलिपुञ्जमालिनीम् ।
मालिकाममरकाननेश्वरी
चारु तच्चिकुरबन्धने न्यधात् ॥ ६८ ॥

गन्धवारि मृगनाभिमिश्रितं
मिश्रितञ्च दयितेन तत्कृते ।
अङ्गके च वसनेऽनिलाङ्गना
सम्भ्रमेण सुदृशस्तदार्पयत् ॥ ६९ ॥

रञ्जितैर्गमकमूर्च्छनादिभिः
सङ्गतैर्मुरजनादितैरपि ।
श्राव्यघोषमधुरनिक्वणैर्मनः
सुभ्रुवोऽरमयदाशु भारती ॥ ७० ॥

पुरन्दरोऽपि स्मितसुन्दराननः
सभाजयित्वानुगतान् मरुद्विपः ।
शचीसमप्रीतिभरैः करम्बितः
सहामुना मन्दिरमुज्ज्वलं ययौ ॥ ७१ ॥

हर्म्येषु हैमखचितेषु तदा वसन्तः
सन्तोषसन्ततिपरा विविधान्नपानैः ।
तल्पैः सुकोमलदुकूलसधातुकूलैः
सर्वे क्षपां नृपतयः क्षपयाम्बभूवुः ॥ ७२ ॥

सविनयमनुवेलं लालितो वासवेन
त्रिदशयुवतिवृन्दैरादरादर्च्यमानः ।
सपदि मुदितचेताः किन्नरोपात्तगीतै-
र्मधुरिपुरपि रम्यां यामिनीं तामनैषीत् ॥ ७३ ॥

इति वासुदेवविजये महाकाव्ये नायकानन्दनो
नाम पञ्चदशः सर्गः ।

## षोडशः सर्गः ।



श्रीपतिः परमया मुदान्वितै-
रर्चितः प्रणयनिर्भरैः सुरैः ।
नाकनायकनगरेऽतिसुन्दरे
सत्यया सममवाप सम्मदम् ॥ १ ॥

किन्नरीभिरुपवीणितोऽनिशं
प्रीणितश्च सुरसुन्दरीगणैः ।
सर्वतः सुरपुरे परिभ्रम-
न्नुत्सवं हरिरपारमाप्तवान् ॥ २ ॥

संविगाह्य कनकाब्जमालिनीं
स्वच्छशीतलजलां सुरापगाम् ।
पारिजातपरिकल्पितस्रजौ
भूभुजौ मुमुदिरे सुरा यथा ॥ ३ ॥

वीक्ष्य वीक्षणमनोविनोदिनं
पारिजातमुपजातकौतुकम् ।
नक्रमानि मनसैव सादरं
यादवेन नितरां निजोद्यमः ॥ ४ ॥

चन्दनानिलविलासलालिते
सेविते सुरभिणा दिवानिशम् ।
सञ्चरन् दयितया समं शने-
र्नन्दने मुदमसावविन्दत ॥ ५ ॥

गीतकैर्मधुररागरञ्जितै-
र्नर्त्तनैर्नयनरञ्जनैरपि ।
श्रमियं सुरपुरीमधिष्ठितं
सादरं तममरा व्यनूनुदन् ॥ ६ ॥

प्रेयसेव ललिता कलावती
शारदेन शशिनेव शर्व्वरी ।
देवराजनगरी महोज्ज्वला
केशवेन सुतरामशोभत ॥ ७ ॥

सन्ततस्मितसुधालसन्मुखं
कायकान्तिभरभासिताम्बरम् ।
लोचनैस्तमपिवन् मुदान्विताः
शर्व्वरीशमिव सर्व्वतो जनाः ॥ ८ ॥

याभिरर्च्चिविषयीकृतः स्फुर-
न्नीरनीरदनिभोऽयमादरात् ।
ताभिरुल्लसितगर्व्वनिर्भरं
दृंगमानि सफलं निजं जनुः ॥ ९ ॥

अम्बराभरणपानभोजनै-
स्तोषिता मघवताथ सन्ततम् ।
उल्लसत्कनकहर्म्यवासिनो
यादवा मुदमवापुरुच्चकैः ॥ १० ॥

प्रीतिपूर्णहृदयस्तथा स्वयं
वासवो नृपगणानतोषयत् ।
अन्वभावि मुहुरेव तैर्यथा
नर्मदो नवनवत्वमेत्यसौ ॥ ११ ॥

यद्यदिष्टमिह विष्टपत्रये
वस्तु चारु ददृशुर्दिवौकसः ।
आदराद्ददुरुदारचेतस-
स्तत्तदुज्ज्वलगुणाय शार्ङ्गिणे ॥ १२ ॥

इत्यमन्दमपारवैभवै-
कल्पसत्प्रणयनिर्मलैः सुरैः ।
पूजितोऽपि मुरजिन्निजां पुरीं
गन्तुमुत्सुकमनास्तदाभवत् ॥ १३ ॥

वीक्ष्य गन्तुमनसं मधुद्विषं
बाष्पपूर्णनयनो महामनाः ।
वाहनाम्बरविभूषणादिभि-
र्गोत्रभिद् यदुगणानतूतुषत् ॥ १४ ॥

स्नेहतोऽभ्युपगता सुरारये
दातुमाशिषमुदारचेतसः।
कश्यपप्रमुखयोगिपुङ्गवाः
सामसम्भृतपदस्वरं जगुः ॥ १५ ॥

तत्र पूर्णदधिपात्रपाणयो
मङ्गलोल्लसितचारुगीतयः।
सुभ्रुवः स्मितवलन्मुखेन्दव-
स्तं प्रसूननिकरैरवाकिरन् ॥ १६ ॥

उल्लसल्ललितगीतिनिःस्वनै-
स्ताण्डवैर्जय जयेति घोषणैः।
वाद्यतूर्यनिनदैश्च निर्भरं
स क्षणः क्षणमयोऽभवत् खलु ॥ १७ ॥

शार्ङ्गिणो नववियोगवेदना-
दूनमुच्छ्वसितबाष्पसङ्कुलम्।
नाकिनां वदनमण्डलं तदा
निर्जिगाय हिमसम्भृताम्बुजम् ॥ १८ ॥

सिद्धयोऽथ महसाणिमादयः
शङ्करेण हरये निवेदिताः।
प्राप्तिया सममभीप्ससम्पदः
प्रीतयेऽस्य नितरामदाद्विधिः ॥ १९ ॥

भूषणं सुरपुरस्य पूरकं
याचकेहितभरस्य वृत्रहा ।
देहबन्धमिव च स्वकं यशः
पारिजातमददाम्बुदिये ॥ २० ॥

शक्तिरप्रतिहता रणाजिरे
सादरेण विहिता शिखावता ।
आतपत्रमिह काञ्चनप्रभं
पाथसाम्पतिरपि न्यधान्मुदा ॥ २१ ॥

माधवस्य वपुषि स्वकं तदा
वीर्यमूर्जितमदात् सदागतिः ।
यत्र भूस्टदपि कोपमञ्चयं
लघ्यः चतसुरारयेऽदिशत् ॥ २२ ॥

आहवे विजयसिद्धिसुहतां
दीर्घमायुरपि सन्ददौ यमः ।
नायकोऽथ फणिनां व्यश्रिणद्
रत्नराशिममितं मुरारये ॥ २३ ॥

सुप्रतीकसदृशानुरूक्षियो
दन्तिनो मदभरेण मेदुरान् ।
वाजिनश्च तुरगेशसन्निभान्
कोटिशो हिमगिरिस्तदा ददौ ॥ २४ ॥

*यद् यदिष्टमभवद्विशेषतो
वाहनं वसु विभूषणादिकम्।
सम्भ्रमादुपगता रथाङ्गिने
तत्तदाशु ददुरस्तपोत्तमाः ॥ २५ ॥

रक्षितः सुरपतेर्निदेशतो
माधवस्य पुरतो महाबलाः।
नन्दनेन विपिनेन संयुतं
पारिजातमवहन् तदाचिरात् ॥ २६ ॥

आदरेण परिरभ्य निर्भरं
बाष्पपूर्णनयना पुलोमजा।
भूषणाम्बरविलेपनादिभिः
केशवस्य दयितामतोषयत् ॥ २७ ॥

प्रोज्ज्वलमणिमयं महास्त्रनं
स्यन्दनं कुलिशवाजिसप्तकम्।
मातलिर्मघवतो निदेशतो
यादवस्य पुरतो न्यवेदयत् ॥ २८ ॥

अश्रुपूर्णनयनाजशालिना
वज्रिणा समुपगुह्य निर्भरम्।
स्नेहतः शिरसि चुम्बितो मुदा
तं ननाम विनयादधोक्षजः ॥ २९ ॥

सोऽभिवन्द्य जगदेकवन्दितो
धातृशङ्करमुखान् जगद्गुरून् ।
आरुरोह दयितासखो रथं
मेरुशृङ्गमिव रोहिणीपतिः ॥ ३० ॥

कूञ्जितैर्हिरदहन्दबृंहितै-
र्हेषितैरपि महीयवाजिनाम् ।
पूरयन् दश दिशः समन्ततो
निर्जगाम सगणो यदूद्वहः ॥ ३१ ॥

कौतुकोत्तरलिताः समुल्लस-
ल्लोललोचनसरोजराजिभिः ।
माधवं त्रिजगदर्च्यमार्चिषुः
सादरं सुरपुरीनिवासिनः ॥ ३२ ॥

हाससुन्दरमुखेन्दवस्तदा
मुग्धलोचनचकोरमञ्जयाः ।
वासवानुजमवाकिरन् मुदा
चारुचन्दनरजोभिरङ्गनाः ॥ ३३ ॥

सम्मदोल्लसितयाद्यं तया
दूयमानसुरमिन्द्रपत्तनम् ।
अर्द्धनद्धनयचन्द्रमर्द्धतो
वर्द्धमानतिमिरं नभोऽहसत् ॥ ३४ ॥

स्पष्टवीक्षणकुतूहलोल्लस-
ल्लोचनोऽथ परया मुदान्वितः ।
वल्गुहासवदनेन्दुरादरा-
न्माधवः प्रियतमामभाषत ॥ २५ ॥

ध्यानधन्यहृदया दयास्ततो
मानसाः कमलजन्मनः सुताः ।
देवि ! सप्त मुनयो नयोज्ज्वला-
रुन्धती च सकलं निभालय ॥ २६ ॥

दृश्यतामिदमुदारमम्बरे
मण्डलं हिमकरस्य राजते ।
फुल्लपद्ममुखि ! कामिनीमुखै-
रेतदेव तुलनाविलासभृत् ॥ २७ ॥

स्यन्दमानतुहिने हिमद्युतौ
भाति चातिखरभासि भास्करे ।
वैभवासरमिवेदमम्बरं
नातितप्तमथ नातिशीतलम् ॥ २८ ॥

स्मेरनीरजदलाक्षि ! लक्ष्यता-
मद्भुतास्ततमहःसमच्छविः ।
हीरहारकचिमम्बरश्रियः
सन्तनोति दिविषत्तरङ्गिणी ॥ २९ ॥

भ्राजमानमणिराजिराजित-
स्चारुकाञ्चनमयो महागिरिः।
एष शेखरमणिप्रभः प्रिये !
भूपयत्नविरतं जगत्त्रयीम् ॥ ४० ॥

हृष्यतामियमुदारमानसे !
मानसे सरसि सम्भृतादरा।
चारुमारुतरयाम्भःस्थले
कुण्डलीयति मरालमण्डली ॥ ४१ ॥

इन्द्रनीलमणिनीलविग्रहा
वारिदाः सलिलभारमन्थराः।
सञ्चलन्ति वियदङ्गने स्फुटं
मन्मथक्षितिपकुञ्जरा इव ॥ ४२ ॥

प्रेक्ष्य चण्डमधः शुचिस्मिते !
सस्मितं नयनयुग्ममादरात्।
सङ्कुलापि विपुलाब्धिभूधरै-
र्यित्रगेव धरणी विभाव्यते ॥ ४३ ॥

पश्य हंसगमने ! यथा यथा
यात्यसौ वियति वेगतो रथः।
सञ्चरन्ति परितस्तथा तथा
कौतुकादिव दिशः सकाननाः ॥ ४४ ॥

स्यन्दनेन जविनामुना क्षणा-
द्दासवस्य दिशमागता वयम् ।
दीव्यते दरतरङ्गभङ्गुरः
प्राग्वारिनिधिरेष सुन्दरि ! ॥ ४५ ॥

चञ्चलाक्षि ! तव कञ्चुलीकृतं
चारुचारवयुतं सुरञ्जितम् ।
सूक्ष्मवस्त्रमिदमत्र जायते
चीनपत्तनमितो निभालय ॥ ४६ ॥

दक्षिणेन गिरिराजमीक्षता-
मञ्जनाभनवनीरदाश्रितम् ।
सन्ततस्रुततुषारपाण्डुरं
रैवतीयमिव नीलवाससम् ॥ ४७ ॥

देश एष वरभूषणं भुवः
कामरूप इति विश्रुतः प्रिये ! ।
यस्य वैरगुरुसारसौरभै-
र्मोदमञ्चति चिरं चराचरम् ॥ ४८ ॥

साधकप्रचुरसिद्धिदायिनी
नीलशैलशिखराधिवासिनी ।
शङ्करेण सहिता गिरीन्द्रजा
नैनमेणनयने ! विमुञ्चति ॥ ४९ ॥

देवपत्तनमिवातिसुन्दरं
भारतीप्रियसुतैर्निषेवितम् ।
उल्लसद्गुरणिमौलिमण्डनं
वङ्गमण्डलमिदं विलोकय ॥ ५० ॥

जानकीजननभूमिरीक्ष्यतां
मञ्जुकेशि ! मिथिलेयमग्रतः ।
प्राप शुक्लयजुरत्र तर्पिताद्
याज्ञवल्क्यमुनिरंशुमालिनः ॥ ५१ ॥

काशिका परपदप्रकाशिका
कार्मुकाकृतिरियं विराजते ।
श्लिष्यतीव वरणासिकैतवाद्
यामसौ भुजयुगेन जाह्नवी ॥ ५२ ॥

ये मनागपि वसन्ति मानवाः
पत्तनेऽत्र कुसुमाशुगद्विषः ।
तैरुदारचरितैः करे कृता
हेलयैव पुरुषार्थसिद्धयः ॥ ५३ ॥

एष वर्द्धितगिरा महीधरो
वासरेयसरणे रुरुत्सया ।
दृश्यतां सुतनु ! विन्ध्यवासिनी
सर्वदा वसति यत्र सर्वदा ॥ ५४ ॥

पातकाशनिरितः सुरापगा
सङ्गता यमुनयापि विद्यया ।
मज्जतामिह कदापि मज्जते
नाम्बुजाक्षि ! जनिवेदनाभरः ॥ ५५ ॥

जाह्नवीचपलभङ्गचामरं
तीर्थराजमिममादराङ्गमः ।
आतपत्रमिव यत्र राजते
नीलनीरदनिभो महावटः ॥ ५६ ॥

उज्ज्वलाक्षि ! मधुरेयमुज्ज्वला
बाल्यकेलिमतशालिनो मम ।
यत्र केनचिदुदीर्णतेजसा-
घानि भोजपतिरोजसान्वितः ॥ ५७ ॥

पालितं सपदि पाण्डुजन्मनां
वारणावतमिदं वरानने ! ।
कश्चिदत्र दमघोषसम्भवं
राजसूयसमये व्यनीनशत् ॥ ५८ ॥

हृष्टनागकसुतविक्रमं कुरु-
क्षेत्रमेतदबले ! विलोकय ।
आममर्द तरसा सुयोधनं
दुर्द्धरोऽत्र गदया वृकोदरः ॥ ५९ ॥

पीवरोरु! मरुदेशमोचतां
यत्र हन्त पथिकास्तृषाकुलाः।
भौमवाष्पमिलिते रवेः करै-
र्वारिमोहमुपयान्ति भूरिशः॥ ६०॥

राघवोदितवियोगसाक्षिणो
दक्षिणा दिगियमर्चितोयिणी
यद्विलोकनविनोदशालिना
भानुनापि बत मान्द्यमुह्यते॥ ६१॥

तीरभूमिरियमम्बुधेः पुरो
नारिकेलवतराजिमेचिका।
राजतीन्दुमुखि! सागराम्बरा-
सुभ्रुवो भुवमिता दशादशाम्॥ ६२॥

केतकीकुसुमगन्धबान्धवो
लोलयन् मृदु लवङ्गवल्लरीः।
शीकरप्रकरसङ्गशीतलो
मन्दमन्दमयमेति मारुतः॥ ६३॥

सागरोऽयमुरुभङ्गनिर्भरा-
न्दोललोलजलजन्तुसन्ततिः।
शीर्यमाणघनशुक्तिनिःसर-
मौक्तिकोत्करपरीतसैकतः॥ ६४॥

केकिकण्ठरुचिरौ नभोऽम्बुधी
दूरतो मधुरसङ्गतिङ्गतौ ।
तुल्यवर्णविभवौ परस्परं
स्निह्यतः सुतनु ! बान्धवाविव ॥ ६५ ॥

जीवनोच्छ्वसितमाप मन्दतां
वारिधिर्यदिह सैकतेऽधुना ।
शङ्खशुक्तिनिकरेण सङ्कुले
दीव्यते विपुलचञ्चुपङ्क्तिभिः ॥ ६६ ॥

नीलनीरजनिभाक्षि ! राजते
नीलनीरजनिभोऽयमीक्ष्यताम् ।
फेनपुञ्जकितवान् समन्ततो
राजहंसनिकरैरिवाचितः ॥ ६७ ॥

शीर्णशीर्षकतया समुच्छ्वसत्-
श्वासकोषयमियात् क्रमेण हि !
घर्षतेऽयमनिशं महालये !
कुन्दपुष्पनिचयेन वीचिभिः ॥ ६८ ॥

नीलकान्तमणिकान्तिसुन्दरे
कुन्ददन्ति ! पुरतोऽम्भसां भ्रमो !
भ्राजतेऽत्र नितरां महागुहा
विन्ध्यशैलविततस्थले यथा ॥ ६९ ॥

इन्दिरामृतसुधांशुकौस्तुभ-
श्रेष्ठरत्ननिकरस्य मोषणात्।
अस्य तद्विरहवह्निरन्तरं
सन्ततं दहति वाडवच्छलात् ॥ ७० ॥

विद्रुमाद्रिरिह रच्यते सदा
क्षुद्रकीटनिवहैरपि प्रिये।।
शिल्पिनो यमवलोक्य विस्मिता-
स्तान् स्तुवन्ति मुहुरेकतापरान् ॥ ७१ ॥

अम्बुदैर्मिलितमुग्धकैर्ज्वल-
स्तम्भमिन्दुमुखि! पश्य चामुना।
रञ्जितेन रविबिम्बमूर्च्छना-
द्रत्नचूड इव भाति वारिराट् ॥ ७२ ॥

गच्छतोऽस्तशिखरं नभोमणे
रक्तचूर्णनिभरश्मिसंक्रमात्!
अद्य मे वियति सर्पते भ्रम-
इक्रिपकधियमेष यच्छति ॥ ७३ ॥

उत्तराजिभिरिवाभिराजितो
नासिकाविवरनिःसृताम्बुभिः।
भाजते तिमिगणोऽच जङ्गम-
द्वीपपुञ्ज इव मञ्जुभाषिणि ! ॥ ७४ ॥

क्षोभितोऽयमहह प्रभञ्जनै-
र्मज्जयन् सपदि पोतसञ्चयम् ।
जङ्गमाद्रिनिभभङ्गबाहुभि-
र्नृत्यतीव सहसा समन्ततः ॥ ७५ ॥

कुञ्जरप्रमुखयादसाङ्गणो
भीमभङ्गभुजगान् विदारयन् ।
क्षोभयन्नपि जलौघमञ्जसा
गर्ज्जितैः स्थगयतीव रोदसी ॥ ७६ ॥

संहतावयमसीमविक्रमः
सत्यमेतदयि सत्यभाषिणि ।
शौर्य्यवीर्य्यबलसम्पदः क्षणाद्
देहिनां यदिह यान्ति वन्ध्यताम् ॥ ७७ ॥

मेलराडपि विलासकन्दको
नूनमस्य पुरतो विलासिनः ।
क्षोभितः ससखि ! सर्व्वतोऽवनीं
प्लावयन् यतितुमीशिता खलु ॥ ७८ ॥

कालघोरकुटिलास्यकन्दरं
सर्व्वमेतदभितः प्रवेक्ष्यति ।
किन्तु नित्यमयमेव सुन्दरि !
स्थास्यति ध्रुवमनन्तयौवनः ॥ ७९ ॥

मतृततत्रिभुवनो निजेच्छया
पन्नगेन्द्रफणतल्पमाश्रितः ।
अत्र संविशति योगमायया
मुद्रितस्थिरतरं परः पुमान् ॥ ८० ॥

देहि देवि ! इत्यमादरादितो
द्वारकेयमुदिता गुणोत्करैः ।
यद्विलोकनकुतूहलोदया-
त्रोदमेति मम मानसं मुहुः ॥ ८१ ॥

अत्र शोणमणिराजिराजिता
दृश्यतां मृदति ! हर्म्यमण्डली ।
यत्प्रभाभिरभितो विभूषितो
भानुरस्तमयेऽरुणायते ॥ ८२ ॥

धारयन्नुरसि रत्नशालिनीं
हारमालामयमहो सरित्पतिः ।
कौस्तुभोल्लसितवक्षसं हरिं
स्मारयन् स्फुरति चारुहासिनि ॥ ८३ ॥

अस्मदागमनसंश्रुतिस्रव-
न्मोदबाष्पभरमन्थरेक्षणाः ।
सम्भ्रमादनधिरूढवाहना
निःसरन्ति नगरादितो जनाः ॥ ८४ ॥

इत्थमालपति माधवे मुदा
मातलिर्विदिततत्समीहितः ।
आनिनाय रथमञ्जसा महीं
किं विशुद्धमतयो विलम्बिनः ॥ ८५ ॥

तत्रावतीर्य रथतोऽथ रथाङ्गपाणिः
प्रीत्युन्मुखान् गुरुजनान् प्रणनाम नम्रः ।
भक्त्यानतः शिशुभिरश्रुकलाविलाक्षं
तानालिलिङ्ग समुदीर्य च मङ्गलानि ॥ ८६ ॥

सरभसमनुयातः सम्मदाद्बन्धुवर्गैः
पथि पथि नगरीयैरादरादर्च्यमानः ।
जयजनितविभासोल्लासफुल्लाननश्रीः
पुरमविशदमन्दानन्दसान्द्रो मुकुन्दः ॥ ८७ ॥

उपान्तयुग्मं चरणैरधिष्ठिता-
नानन्दयन् पौरजनान् व्रजन्नसौ ।
जगाम साम्यं सुतरां तदा स्फुटं
छायापथान्तश्चरता हिमांशुना ॥ ८८ ॥

मुरहरेण मनोहरमूर्त्तिना
निखिललोकविलोकनपालिषु ।
अथ विलोकनतोऽपि वितेनिरे
द्रवदमन्दसुधारसवृष्टयः ॥ ८९ ॥

सुरपतिर्विजितः समराङ्गने
भुवमनायि तरुर्खिदिवौकसाम् ।
इदमुदारतरं परितः प्रजाः
सपदि तस्य यशोऽभिनवं जगुः ॥ ८० ॥

मृदिततालविलासविलक्षणा
मधुरगीतकलासु कलाविदः ।
प्रतिसभं शुभशंसि हरेर्यशो
मृगदृशो रुचिरं समगासिषुः ॥ ८१ ॥

मणिमयोत्तमकृत्रिमपर्व्वतो-
परि परिस्फुरदुग्रतरद्युतिः ।
विनिहितो मुदितेन मधुद्विषा
सुरतरुर्विललास सनन्दनः ॥ ८२ ॥

रुचिरकाञ्चनकुम्भसमाहृतै-
र्ललितकेलिसरःसलिलोत्करैः ।
प्रमुदिताः सततं सह सत्यया
सिषिचुरङ्घ्रिपमुं सुरशाखिनम् ॥ ८३ ॥

मधुरगन्धभरैः कुसुमाकरै-
र्मधुरचारुपरागपरागतैः ।
मृदुलयापि च पल्लवशय्यया
तमुपसेव्य मुदं दधुरङ्गनाः ॥ ८४ ॥

सुरतकामसवैरधिकादराद्
विहितया स्वयमेव नवस्रजा ।
प्रियतमाकवरीं परिभूषयन्
मुरहरो मुमुदे कुमुदेक्षणः ॥ ८५ ॥

सकलया कलया भुवि राजता
हिमरुचेव मनोरममूर्त्तिना ।
नवनवत्मनायि मुरारिणा
निखिललोकमनःकुमुदव्रजः ॥ ८६ ॥

सजलजलदकान्तिर्लोकशोकापहारी
दितिजगजसमूहान्मूलसंहारसिंहः ।
प्रतिदिनमपि पूर्णः स्फीतसम्पत्प्रतानै-
रधिधरणि ननन्दानन्दकन्दो मुकुन्दः ॥ ८७ ॥

तत्त्वशास्त्रविचारपारगमतिस्तर्कस्य पारङ्गमो
वाक्चातुर्यविनिर्ज्जितामरगुरुः काव्येषु काव्योपमः ।
मीमांसापरिनिष्ठितः श्रुतिविदां संख्यावतामग्रणी-
र्भारद्वाजकुलेऽमले समजनि श्रीकालिदासः सुधीः ॥ ८८ ॥

वागीश इव विद्यायां विद्यावागीशनामभाक् ।
शान्तिपरसमुद्रोत्थचन्द्रः सोऽयं बभौ भुवि ॥ ८९ ॥

464

स्फूर्ज्जद्गुणप्रकरवासितविष्टपस्य
श्रीरामनाथवटुना तनयेन तस्य ।
श्रीवासुदेवविजयाख्यमिदं प्रणीतं
शाके शराम्बरगजास्ततरश्मिमाने ॥ १०० ॥

न कवित्वाभिमानेन न कीर्त्तिप्रसरेच्छया ।
मयेदं गुम्फितं यस्माद् गुरोर्मे प्रीतिहेतवे ॥ १०१ ॥

इति वासुदेवविजये महाकाव्ये पूर्णमनोरथो
नाम षोड़शः सर्गः ।



# शुद्धिपत्रम्।

| पृष्ठा। | पंक्तिः। | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| १५ | ११ | सज्जति | सज्जते |
| ,, | १२ | अयोः | अयो- |
| २५ | ३ | हेतुः | हेतोः |
| ३६ | ८ | मानसां | चेतसं |
| ६२ | ६ | वारिजायां | वारिजानां |
| ६६ | १८ | कवीन्द्रान् | मुनीन्द्रान् |
| ६७ | २ | वक्षं | वक्षं |
| ७० | १० | पराङ्मुखानां | पराङ्मुखायां |
| ७४ | १९ | कणीयान् | कणीयान् |
| ८५ | ५ | तन्मने ! | तन्मुने ! |
| १२१ | २० | अम्बराशैः | अम्बुराशेः |
| १३३ | १९ | स्फरन् (एवं परत्र) | स्फुरन् |
| १२४ | ७ | अत्यचक्रैः | अत्युचक्रैः |
| १३१ | ५ | प्रार्थिते | प्रार्थितो |
| १६० | ११ | ददति | दधति |
| १६१ | ५ | विभु | विधु |
| १६४ | १३ | तेनैवम् | स एवम् |
| १६७ | ७ | ध्यानर्थः | ध्यानर्थुः |
| १८९ | १० | भिरा | भिवा |
| २१० | २ | मजगु | प्रयात |

